# GURUVAMSA KAVYA

IN SANSKRIT

BY

KASI LAKSHMANA SASTRI



WITH

Notes in Sanskrit and English

Sri Vani Vilas Press
Srirangam

1966



श्रीदक्षिणाम्नाय शृङ्गगिरि श्रीशारदापीठाधिपति श्रीजगद्गुरु
श्रीमदभिनवविद्यातीर्थमहास्वामिनः ।

## PREFACE

One of the rare and valuable manuscripts in the library of the Śriṅgēri Maṭh is the *Guruvamśa*, a *Kāvya* in 19 cantos. Its author Kāśī Lakshmaṇa Śāstri was an *āsthāna vidvān* in the maṭh during the pontificate of Śrī Sacchidānaṇda Bhāratī II (1706–41). The concluding cantos refer to the Karnataka expedition of Peshwa Bāji Rāo in 1726–7 (xvii–28), a festival in the Malahānikarēśvara temple in the year *Ānanda*, corresponding to A. D. 1734 (xix–20) and to the installation of Śiva *liṅga* in Rāmēśwaram also in 1734. The *Kāvya* was written during the lifetime of Śrī Sacchidānaṇda Bhāratī (1706–41), and Somaśēkhara Nāyaka II (1714–39) of Keladi. The date of the *Kāvya* may therefore be fixed as *C.* 1735; it was written certainly before 1739.

The cantos that deal with Śrī Bhāratī Tīrthā and Śrī Vidyāraṇya closely follow the account in the *Vidyāraṇya Kālajñāna*, and the narration of the early history of Harihara and Bukka does not materially differ from our present knowledge of the story of the two brothers as gleaned from the sources available to us. The historical events touched upon in the last eleven chapters also tally with the known facts of the history of the Karnāṭaka Kingdoms.

The poet's descriptions of the holy shrines, their sanctity and antiquity are set against a background

of enchanting natural beauty scintillating with the change of seasons. We are presented with a delightful panorama of rivers, hills and dales, back-waters, forts nestling among forests, groves, pleasure gardens, cities and temple festivals. Add to this, the refinements of poetic imagery that runs through the poem. All these mark the work as a *Mahākāvya.* The lover of poetry enjoys reading the *kāvya* as a real work of art; the student of history finds some useful source materials; and the devotee is in the blessed position of being *en rapport* with an illustrious line of saintly Āchāryas and finds himself wafted along in the flood of their *anugraha.*

The poet himself has written a commentary which stops with the fifteenth canto. The late Guru-bhakta Sikhāmaṇi Śrī T. K. Bālasubrahmanya Aiyar published the first seven cantos with the commentary, as No. 12 in the Śrī Vāṇi Vilās Sanskrit Series. His preface envisages the issue of the second part 'at an early date'. It is a matter for gratification that it has now been possible to bring out the second edition, which presents the complete work without the commentary as the text itself is simple and the commentary does not materially add to the information in the text.

We are obliged to Gurubhaktaratnam Śrī K. R. Veṇkata Rāman for furnishing some useful notes in English at the end of each chapter and to Vyākaraṇa Śirōmaṇi, Vēdānta Vidvān Śrī K. S. Veṇkatarāma Śāstri of our press for rendering them into Sanskrit

We humbly and reverentially lay this book at the Holy Feet of His Holiness Śrī Abhinava Vidyā Tīrtha Mahāswāmigal, the Jagadguru of Śriṅgēri Sāradā Pīṭha. His gracious blessings and guidance alone have helped us in this work which to us is a labour of devotion.

Sri Vani Vilas Press
Srirangam
Tiruchirapalli–6

*PUBLISHERS*

॥ श्रीः ॥

# ॥ गुरुवंशकाव्यम् ॥



## प्रथमः सर्गः ॥



स्वस्ति श्रीगजवदनस्तनोतु भक्तानाह्वातुं श्रुतियुगलं पुरोविलोलम् ।
विघ्नौघान्विगमयितुं पुनश्च पश्चात्कुर्वाणः प्रणतहितार्पणे प्रवीणः ॥

विद्यायां मम पितरौ गुरू भवेतं पड्वक्त्राण्यपि सफलानि सन्तु नान्यम् ।
यामीति स्ववचनलब्धहर्षपित्रोरासन्नो दिशतु शुभानि मे षडास्यः ॥

संख्यातुं भजकवरान् सुधां प्रदातुं
संप्रीत्या धियमखिलाः कलाश्च सद्भ्यः ।
अक्षस्रक्कलशसुबोधपुस्तकश्री-
हस्तैषा मम हृदि शारदा सदास्ताम् ॥ ३ ॥

वाणीं स्वां सफलयितुं यथामनीषं कुर्वे श्रीगुरुकुलवृत्तपूर्णकाव्यम् ।
दोषाणामपि सुगुणीकृतौ प्रवीणा वात्सल्यात्कृतिन इदं विलोकयन्तु ॥

गम्भीरं क नु गुरुवंशसच्चरित्रं बालोऽहं क च जडबुद्धिरेकवक्त्रः ।
स्वर्णाद्रिं करतुलया मिनोम्मि मोहादम्भोधेः परिमितिमादधे करेण ॥

आर्याणां कुलमुपदर्शितं कवीन्द्रैः प्रस्तोतुर्मम वचसो-मनाक्प्रचारः ।
वात्सल्यस्नुतममृतं जवेन पातुं वत्सस्योपगतिरिवास्तु सौरभेय्याः ॥

सन्मार्गं प्रकटयिता समस्तलोकान्सञ्चाराद्विमलयिता त्रिकालवेदी ।
स्वर्लोकाद्भुवमवतीर्य भूरिभेदान्मर्त्यौघांश्चिरमथ नारदो ददर्श ॥

दुर्वृत्तैर्विविधमतेषु साभिमानैर्व्यत्यस्तश्रुतिवचनार्थवादशीलैः ।
संकीर्णां क्षितिमवलोक्य सत्यलोकं गत्वैष द्रुहिणमिदं वचो जगाद ॥

लोकेशाकलय कलेर्बलेन लोका भूलोके बत समहासिषुः स्वधर्मान् ।
सर्वांस्तान्न कथयितुं क्षमे खलौघान्संक्षेपाज्जनक वदाम्यथापि कांश्चित् ॥

केऽप्यैन्द्रा दधति सदैव वज्रमालां देवेन्द्रं निखिलजगन्निदानमाहुः ।
सेवन्तेऽपि च तमुपेन्द्रमुख्यदेवाः कैवल्यं किल तदभेदबोधमूलम् ॥

आहुः केऽप्यहरधिपं जगत्प्रसूतिं ब्रह्माद्यैस्त्रिदशवरैः समर्चितं च ।
किं चार्कप्रतिभटतप्तलोहमुद्रां धृत्वार्चां विदधति रक्तसिक्तगन्धैः ॥

नागास्यं कतिचन सर्वसर्गहेतुं जानन्तस्तदितरदेवसेवनं तु ।
त्यक्त्वाङ्कं भुजलतयोस्तदीयपाणेः कुर्वाणा द्रुहिण चरन्ति भूमिभाराः ॥

मत्वोग्रं सकलफलप्रदानदक्षं विप्राणां सपदि शिरांसि कर्तयित्वा ।
तैरर्चां विदधति भैरवस्य केचित् हा नष्टा श्रुतिसरणिस्तु तात तिष्ये ॥

कालीं केऽप्यखिलजगन्निदानभूतां
ज्ञात्वास्या द्विजकुलजातजन्मनोऽपि ।
मांसाद्यैर्बत रचयन्ति पूजनं भोः
किं ब्रूयां कलियुगजातलोकदौःस्थ्यम् ॥ १४ ॥

कर्मैव प्रभवति सर्वसौख्यदाने नैवेशः फलद इहेति केचिदज्ञाः ।
किं चेशोऽप्यखिलसमस्तरक्षणार्थं कर्मैव प्रबलतरं समीहते हि ॥ १५ ॥

लक्ष्मीशं विधृतसुदर्शनादिचिह्नाः सेवन्ते तदितरदेवता विहाय ।
त्यक्त्वान्ये पितृमृतिकालसंविधेयं तन्वानाः पशुमपि पैष्टमेव यज्ञे ॥

लिङ्गाङ्काः पशुपतिभिन्नदेववर्गं निन्दन्तः कतिचन तत्र बाहुमूले ।
वक्षस्यप्यनिशमहो धृतेशलिङ्गाः पाषण्डा धरणितले चरन्ति तात ॥

प्रामाण्यं श्रुतिषु बलान्निवारयन्तो निन्दन्तो निगमविधेयकर्मजातम् ।
जैनाद्यास्त्रिजगति नैव सन्ति देवा इत्येवं शिवशिव साहसाद्वदन्ति ॥

आचारे शुचि मनुजा यथेच्छचाराः प्रोज्झन्तो निजनिजवृद्धसच्चरित्रम् ।
संकीर्णान्विदधति हन्त सर्वधर्मान्सर्वांस्तान्सुविहितबोधनेन शाधि ॥

सर्वांस्तानपि चतुरास्य शासितुं द्राक्
याचे त्वां सपदि विचिन्त्यतामुपायः ।
इत्युक्तो विधिरथ नारदं बभाषे
युक्तं तन्मुनिवर सर्वथा विधेयम् ॥ २० ॥

अत्रार्थे कुशलमतिः क्षणं विचार्य क्षोणीभृद्दुहितृपतेरगात्समीपम् ।
नत्वा तं परमशिवं प्रसन्नवक्त्रं संतोषादथ चतुराननो नुनाव ॥ २१ ॥

कन्दर्पप्रविजयकाल एव चात्तं तन्मित्रं तदुदितचिन्तया सकार्श्यम् ।
शुभ्रांशुं क्वचिदपि वासनाय लोकाविश्वासाद्धतमिवात्मशीर्ष एव ॥

स्वाकारस्मरणकृतामयत्नगङ्गाध्यानश्रीवृषघटनाय तां दधानम् ।
निःसाम्ये स्ववपुषि नित्यसङ्गहर्षादन्योन्यप्रणयसुसङ्गतालकेषु ॥

संप्रीत्या शशिनि समाश्रिते तदङ्कं निह्नोतुं गरलमिषाद्गले दधानम् ।
बिभ्राणं भजकवशीकृतेष्टभूतिं तद्भूतिक्रियफणभोगिनोऽपि भूरि ॥

कैलासाचलमिव धातुमेघजुष्टं व्याघ्रेभाजिनयुगलं तनौ दधानम् ।
स्वीयांघ्रिद्वयभजनेन सर्वसिद्धिं भक्तानां वरदकरेण दर्शयन्तम् ॥ २५ ॥

सद्भक्ताहितलवनार्थमात्तदीक्षं बिभ्राणं परशुवरं च दक्षहस्ते ।
स्वाधीनीकृतपतिशैलजाक्षिलौल्याभ्यासार्थं समुपगतं मृगं धरन्तम् ॥

द्राग्दातुं प्रतिवचनोदयापराङ्गप्रस्फालप्रकटितपारितोषिकाणि ।
कान्ताङ्कोपरि परिरम्भणोद्यदुद्यद्रोमाञ्चांकुरमपरं प्रसारयन्तम् ॥ २७ ॥

आत्मीयार्जुनरुचिशैलजाशितिश्रीकौमारारुणरुचिनिश्चितत्रिवेण्याम् ।
भक्ताक्ष्णोः स्नपनभरैः सदा ददानं काम्यार्थाननुचरनन्दिकेशवन्द्यम् ॥

क्षीराब्धिं ददुपमन्यवे नमस्ते मृत्युघ्नस्त्वममृपितनूभुवो नमस्ते ।
विश्वेश त्रिपुरविभेदिने नमस्ते कामारे खलमखहारिणे नमस्ते ॥

स्तुत्याम्भोरुहभुव ईश्वरः प्रसन्नः
प्रोचे तं किमिह समागतोऽसि वत्स ।
ब्रूहीष्टं सपदि समस्तमातनोमी-
त्युक्तोऽयं प्रतिवचनं मुदा जगाद ॥ ३० ॥ *

इत्येवं विनयगिराथितो गिरीशः भूमौ श्रीशिवगुरुभूमिदेवसूनुः ।
इष्टार्थांस्तव रचयिष्यते मदंशो ब्रह्मन्नित्युरुकरुणानिधिस्तमूचे ॥ ३१ ॥

स्वर्णाद्रेः ककुभि विभाति दक्षिणस्यां
देशः कोऽप्यथ भुवि केरलाभिधानः ।
पूर्णश्रीर्जितदिविषत्पुरैः पुराढ्यै-
र्विप्रौघैः श्रुतिविदितोरुसच्चरित्रैः ॥ ३२ ॥

*अत्र निंशत्तमश्लोकानन्तरं आवश्यकाः केचन श्लोकाः सत्कार्यं ... लभ्यन्ते ।

यस्याख्यामवगमयन्ति निश्चितार्थां संपूर्णाः सुरुचिरकेरभूरुहौघाः ।
तत्रत्या हृदि सरसा बहिः सुरूपा लोका इत्यवगमयत्फलालिभाराः ॥

देशेन स्वरपि समं न सर्वदेति व्यालोलाः क्रमुकमहीरुहा महोच्चाः ।
यत्रैलाव्रततिव्रभूपगुह्यमाना भद्रश्रीधरणिरुहोऽन्वितामिधानाः ॥ ३४ ॥

माकन्दा दृढपरिरब्धनागवल्ल्यो माङ्गल्यं भुवि बहुलं विभासयन्ति ।
यत्रैवं पनसमुखाधिकद्रुमाल्यः सन्तापी रविरपि नेति बोधयन्ति ॥

यत्रत्या ननु बहु धान्यमाश्रयन्तो-
ऽप्याश्चर्यं न हि बहुधान्यमाश्रयन्ति ।
सन्वाद्या यदवनिपान् स्ववाक्यपालान्
मन्वाना इह शुभमस्त्वितीरयन्ति ॥ ३६ ॥

देशेऽस्मिन् विलसति *कारटीति नाम्ना
ग्रामः कोऽप्यवनिसुरैर्विभासमानः ।
स्वाचारैरनवरतं विधीयमानैः
सर्वेषां गुरुभिरिव प्रकाशमानैः ॥ ३७ ॥

आलोच्य स्वयमपि दैवतैः समस्तैरेतादृक्बहुसुकृतस्थले निवासम् ।
वाञ्छद्भिश्चिरमिव कारितैरगारैर्विभ्राजं वरतटिनीतटे विभाति ॥ ३८ ॥

तत्र श्रीशिवगुरुनामकोऽग्रजन्मा प्राग्विद्यापदमधिराजनाम धर्तुः ।
संख्यावन्मकुटमणेर्विशालकीर्तेरम्भोधेरिव सितरोचिरात्मजोऽभूत् ॥

विद्याष्टादशककृती सुकर्मनिष्ठो वासिष्ठोऽयमिति नुतो गुणैर्गरिष्ठः ।
नित्यं यः क्रतुषु हविर्विशेषदानैः पीयूषस्मृतिरहितान् सुरान् वितेने ॥

* कालटीति ।

यं शिष्या गिरममृतं सदा ददानाः लोकेभ्यः सलिलमुचां तुलां दधानाः ।
संपूर्णां स्थिरगुरुदक्षिणां प्रशंसां अम्भोनिध्युपमितिमापयांबभूवुः ॥

मुक्तोऽयं व्रतकरणादृणादृषीणां देवानामपि विहितैः समग्रयज्ञैः ।
निर्मुक्तो न चिरमभूदृणात्पितॄणां सा चिन्ता मनसि सदास्य संनिविष्टा ॥

नापुत्रो व्रजति गतिं सतामितीदं संचिन्त्यानवरतचिन्तनैकलोलः ।
कुर्वाणो भजनमनेकदेवतानां नैरर्थ्यात्प्रियतमयाकरोद्विचारम् ॥ ४३ ॥

प्राज्ञा सा द्विजगुरुदेवतासु भक्ता प्रावोचत् परमथ मे विभाति नाथ ।
लोकानामभिलषितं यदस्त्यसाध्यं तत्सर्वं शिवदययैव साधनीयम् ॥

क्षीराब्धिं समलभतोपमन्युरीशात् द्राग्मृत्युं निरगमयन्मृकण्डुसूनुः ।
पार्थश्च प्रबलमवाप्तवान् वरास्त्रं यक्षेशोऽभवदुरुवैभवः सखा च ॥

प्रागेवं मुररिपुबाणरावणाद्याः स्वस्वेष्टान्युरुतपसा जवादवापुः ।
आवामप्यथ वरदं दयापयोऽब्धिं सर्वेशं तनयवराप्तये भजाव ॥ ४६ ॥

इत्युक्तिं हृदि कृतवान् दृढप्रतिज्ञः प्रौढोऽसौ सह च तया तपांसि तेपे ।
तद्ध्यानं चिरमकरोत्तदंघ्रिपूजां तन्मन्त्रप्रचुरजपं कथां तदीयाम् ॥

शार्दूलाजिनविमलासनोपविष्टः
कर्पूरोत्करविहसद्विभूतिधारी ।
रुद्राक्षान्विधिविहितान् तनौ दधानः
संख्यावान् कलयति शंकरैकभावम् ॥ ४८ ॥

राजच्छ्रीवृषभगिरौ विशुद्धचेताः आसन्ने वरतटिनीतटे मनोज्ञे ।
मूलाशी कतिपयवासरान्फलाशी पर्णाशी बहुनियमान् समश्नाति स्म ॥

एवं तत्कृततपसा प्रसन्न ईशः स्वप्ने तं रुचिरतरामुवाच वाचम् ।
वत्स त्वं मनसि समीप्सितं वदेति प्रीतोऽसौ शिवगुरुरात्मजं ययाचे ॥

पुत्रांस्ते बहुवयसो बहून् किमज्ञान् एकं वा लघुवयसं ददामि सूनुम् ।
सर्वज्ञं तमिति शिवेन पृच्छ्यमानस्त्वस्त्वेकः सकलविदित्युवाच विप्रः ॥

शीघ्रं ते भवतु तथा गृहं व्रजेति प्रीतेशप्रतिवचनान्मुदा बुबोध ।
स्वप्नं तं सपदि वधूं वदन् गृहं स्वं संतुष्टो युवतियुतः समाजगाम ॥

साफल्यं कृततपसो विधातुकामः सद्विप्रान् बहुरुचि भोजयांचकार ।
सद्भक्त्या तदशितशेषभोक्तृभर्तुः शिष्टं सान्वशितवती दधार गर्भम् ॥

सार्धास्यां व्यजयत गुर्विणीति वाणी वर्धिष्णुर्भुवनगुरुर्यतो विवेश ।
अङ्गानामथ कृशतां विलोक्य लोकः क्षीणत्वं भुवि बुबुधे परेषु भावि ॥

सा नारी सितभसितादिनी यतोऽभूदुद्धर्ता तदभिमतं मतं तनूजः ।
किं चास्यास्तनुरपि तन्निभावदाता कैलासद्युतिविलसच्छिवांशयुग्वा ॥

वैरस्यं मलयजभूषणादि धर्तुं
सा चक्रे यदिह जनिष्यते विरागी ।
मध्योऽस्या गगननिभो महत्त्वमापत्
भंक्तावोध्ययमिति शून्यवादिशास्त्रम् ॥ ५६ ॥

नीलं तत्सपादं भविष्यति क्षमायां दुष्टानां वदनमितीव बोधनाय ।
वक्षोजाग्रयुगलनैल्यमाविरासीत् गुर्विण्याः शिवगुरुभूसुराग्र्यपत्न्याः ॥

भर्ता पुंसवनमथो शुभेऽह्नि चक्रे सीमन्तं स शिवगुरुर्मुदा विधिज्ञः ।
गर्भः सोऽप्यथ ववृधे तदीयचेतोहर्षेण प्रतिदिवसं सरोरुहाक्ष्याः ॥

साध्वी सा किल नवमेऽथ मासि पूर्णे सल्लग्नेऽधिपशशिसंश्रिते कुलीरे ।
केन्द्रोच्चैर्गुरुशनिभूमिसूनुसूर्यैः प्रासोष्टामितमहसं सुखेन सूनुम् ॥५९॥

स प्रादात्सुतजननोत्सवक्षणेऽस्मिन् वक्तृभ्यः स्ववसनभूषणादि सर्वम् ।
ईदृक्षं सुतमथ लब्धवानहं मे वस्त्राद्या कियदिति तस्य धीस्तदाभूत् ॥

मग्नोऽपि प्रमदसुधाम्बुधौ सुशास्त्रात्
स्नात्वासौ शुभमथ जातकर्म चक्रे ।
विप्रेभ्यः समदित दक्षिणां महत् किं
जातो यज्ञपति तदात्मभूतिरेव ॥ ६१ ॥

कालेऽस्मिन् हरिणमृगादनादिसत्त्वाः संचेरुः परिहृतजातिवैरभावाः ।
वृक्षाद्याः कुसुमफलान्विता अभूवन् पेतुर्द्रुत्यभिमतपुस्तकानि हस्तात् ॥

तत्काले कृतजयघण्टिकानिनादान्
श्रुत्वा ते दिशि दिशि वादिनो व्यधावन् ।
हर्षेणाखिलनिगमान्तवाग्वधूभिः
शीर्षेऽस्य व्यरचि रयेण पुष्पवृष्टिः ॥ ६३ ॥

बाले बालविवस्वतीव जनिते दैवज्ञसंमानिते
वेदव्यासहृदम्बुजं विकसितं द्वैतान्धकारोऽनशत् ।
हृष्टाः कोविदलोककोकनिकरा आलेख्यलेख्याकृति-
प्रीतस्त्रीतति सूतिकागृहमभात् पूर्णा रुचिः सन्मुखे ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यादिबिरुदावलीविराजित श्रीमन्नृसिंहभारती-
करकमलसंजातसकलविद्याविशारदपंडितपुण्डरीकमण्डलीमार्ताण्ड
श्रीसच्चिदानंदभारतीमुनीन्द्रनिर्मापिते विद्वद्बालकलक्ष्मणशास्त्रिविरचिते
गुरुवंशे महाकाव्ये प्रथमः सर्गः ।

# द्वितीयः सर्गः ॥

श्रीमान्मुदा शुभतमेऽहनि चारु नाम
चक्रे पिता सपदि शंकर इत्यमुष्य ।
अन्वर्थनाम भुवि शंकरणेन यद्वा
शं सर्वदा करवशं ध्रुवमस्य भावि ॥ १ ॥

भाषोक्तिखेलनविलोकनपूर्णहर्षधात्रीजनप्रणयराशिरिवातिरागी ।
माणिक्यगुच्छ उदभादधिदोलमस्य रम्यास्यचुम्बनसमुत्सुकलोललोलः ॥

वर्षे द्वितीय उदितेऽकलयत्स बालः
सर्वा लिपीः समवलिख्य सकृन्न चित्रम् ।
यस्मादभूदयमथाक्षरबोधनार्थ-
मद्वैतरीतिमवलम्ब्य गुरुर्जनानाम् ॥ ३ ॥

काव्यादिकाखिलकलाः स तृतीय एव
वर्षे बुबोध सकृदेव शिशुर्निशम्य ।
प्राप्ताः कलाश्च सकलाः स्वयमेव बाल्ये
भूमौ कलानिधिविभूषण एष यस्मात् ॥ ४ ॥

चूडाकृतिं व्यतनुत द्विजराजचूडा-
रत्नस्य चं स्वयमथो विधिवद्विधिज्ञः ।
वैधेन तेज उदयेन विशेषभास्वान्
उत्तेजितो मणिरिवैष तदा विरेजे ॥ ५ ॥

बालाम्बुजाननविलोकनपूर्णकामो
भूलोकभूत्यनुभवे कृतकृत्यबुद्ध्या ।

ऐश्वर्यमैश्वरमनश्वरमाप तातः
तां बन्धुतापि समसान्त्वयदस्य पत्नीम् ॥ ६ ॥

तं प्रीतिभागुपनिनाय स बन्धुलोक
आर्षं वचः सफलयन् खलु पञ्चमाब्दे ।
वाञ्छन्नथोपनयनादिसमस्तलीलां
देवोऽवतीर्ण इति तत्र सभा जगाद ॥ ७ ॥

श्रीमांस्ततः शिवगुरोस्तनयः शिवात्म-
जातेन साम्यमधिगन्तुमवाप विद्याः ।
अष्टादशेव नयनानि विकस्वराणि
योगीश्वरत्वमुभयोरपि यौगिकं तत् ॥ ८ ॥

श्रीराजशेखरमवेत्य कृतावतारं तं राजशेखरनृपः समदर्शयत्सः ।
श्रीराजशेखरसुनामकनाटकानि सद्राजशेखरगुणानि कृतार्थतायै ॥

अध्यापयन्तमवलोक्य समस्तविद्या एतं मनीषिमुकुटं प्रकटोरुशक्तिम् ।
नाम्नैव सन्गुरुरथ स्वयमात्तलज्जस्तत्याज भूमिवलये सततं निवासम् ॥

गन्तुं विदूरसरितं जननीमदक्षां
वीक्ष्य द्रुतं स्वगृहसन्निधिमानयत्ताम् ।
अम्बेति नाम च तदाप्रभृतीयमाप्तो-
ऽत्किं दुष्करं जगति योगविदां बुधानाम् ॥ ११ ॥

तत्तीरगामिहरिमन्दिरमूर्मिघातैर्लोलं नितान्तधृतयोगबलो महात्मा ।
अस्थापयत्परत एव ततोऽयमासीद्देवालयोद्धरणकुल्लघुलीलयैव ॥ १२ ॥

स्नानाय तत्र तमुपावतरीतुकामं नक्रोऽग्रहीद्द्रुहिणशापविमोक्षणेच्छुः ।
तद्भीतिदर्शनमिषाज्जननीनियोगं स्वीकृत्य चैष चरमाश्रममाचमूचे ॥

नक्रस्तदैव दिवमेत्य विमुक्तशापो
गन्धर्वरूपमधिगत्य ततोऽवदत्तम् ।
दिव्यां तनुं ध्रुवमधां भवतः प्रसादा-
त्सर्वापराधमपि मे सहसा सहेति ॥ १४ ॥

अम्ब स्मरिष्यसि यदा नु तदा समीप
एवास्म्यथेति जननीमनुनीय पश्चात् ।
प्रागाश्रमे शिवगुरोस्तनुजः शिवस्य
वंशं तथा गुरुकुले च समालुलोचे ॥ १५ ॥

यस्तारकं प्रददते सनकादियोगि-
वन्द्याकृतिः स शिव आदिगुरुः प्रतीतः ।
नारायणस्तत उदञ्चिततत्त्वबोधः
पद्मासनोऽथ तदनुग्रहभाग्बभूव ॥ १६ ॥

छात्रो वसिष्ठमुनिरस्य स यो व्यजेष्ट
ब्राह्मं बलं प्रकटयन्कुशिकात्मजातम् ।
शिष्योऽस्य शक्तिरभवद्धृतमन्त्रशक्तिः
शिष्यः पराशरमुनिः समभूदमुष्य ॥ १७ ॥

विख्यातिमान्समभवत्तत आत्तबोधो
व्यासो महर्षिरपि यो विबभाज वेदान् ।
अष्टादशापि च पुराणगिरः समस्ताः
येनाखिलैकगुरुणैव जगत्सु रेजुः ॥ १८ ॥

येनाद्भुता विरचिता वरसूत्रमाला
ब्रह्मावबोधिवचनार्थमणीगणाढ्या ।

भाष्यं व्यधायि च पतञ्जलिभाषितस्य
येन व्यभासि भुवि भारतवाक्यसारः ॥ १९ ॥

तद्वाक्यकल्पतरुसंभवतत्त्वबोध-
भूयःफलग्रहकृते शुकवत्प्रवर्ण्यः ।
यस्यां शुकोऽस्य वरशिष्य उदैदुदारो
यद्ब्रह्मचर्यमखिलाप्सरसोऽतियात् ॥ २० ॥

श्रीगौडपादमुनिरस्य विभासते स्म
च्छात्रोऽजयिष्ट विबुधानपि गौडगान्यः ।
तत्त्वोपदेशविषयान्विदधे प्रबन्धा-
नाचार्य आद्यविदितोऽत्र महान्हि पङ्क्तौ ॥ २१ ॥

गोविन्दपादमुनिरस्य चकास्ति शिष्यो
यस्यावभाति भगवत्पदमन्वितार्थम् ।
विन्दन्य उत्तमगवीर्विहितार्थनामा
ज्ञेयान्यवैतुमहमेमि तमञ्जसेति ॥ २२ ॥

हृद्येवमाकलयिता दृढमर्थमेत-
दाचार्यसन्निधिमगात्किल योगिबालः ।
संन्यासधर्ममखिलं कलयांचकार
सर्वास्तथोपनिषदोऽवगतार्थमस्मात् ॥ २३ ॥

वैराग्यभाग्यभरयोग्यसुनिर्मलात्मा
धीराग्रगण्यगुणविद्गुरुहर्षदायी ।
द्वैपायनाभिहितसूत्रसमूहशास्त्रं
जग्राह तस्य वचनैरखिलं च वेद्यम् ॥ २४ ॥

भाष्याण्यथाकुरुत तत्र सहस्रनाम-
गीतादशोपनिषदां विशदार्थकानि ।
व्यासोक्तसूत्रनिवहस्य सनत्सुजात-
वाचां यतीश उपदेशसहस्रिकां च ॥ २५ ॥

सौन्दर्यपूर्वलहरीमकरोत्प्रपञ्चसारं
मुनिः स सुभगोदयपद्धतिं च ।
स्तोत्राणि लोकमहिताखिलदेवतानां
नानाविधार्थगुणरीतिविचित्रितानि ॥ २६ ॥

आज्ञामवाप्य सहसैव गुरोरनुज्ञां
ज्ञानप्रकर्षहसितोल्लसिताननः सः ।
तीर्थानि पर्यटितुकाम उदारचेताः
शिष्यैर्वृतो बदरिकाश्रममाससाद ॥ २७ ॥

बालोऽप्ययं प्रतिदिनं सलिलेऽतिशीते
स्नातीति जातकरुणो जगदीश एव ।
उष्णीचकार सलिलं सुखमज्जनार्थ-
मद्यापि तीर्थमिदमुष्णमुदीरयन्ति ॥ २८ ॥

वेदान्तशास्त्रविषयान्प्रविचारयन्तं
तत्र स्थितं सह महर्षिभिरन्वहं तम् ।
दृष्ट्वागतैर्निगदितो बहुभिः स वेद-
व्यासोऽपि शीघ्रमिदमन्तिकमाजगाम ॥ २९ ॥

प्रत्युज्जगाम तमयं सह योगिचन्द्रः
शिष्यैर्विधाय विविधामुचितां सपर्याम् ।

मान्यं यथार्हमुपवेश्य वरासने तं
पप्रच्छ चारु कुशलं विनयावनम्रः ॥ ३० ॥

स्वामिन् कृतार्थमथ जन्म तवेक्षणेन
कारुण्यपूर्ण जगदुद्धरणैककार्य ।
अत्रोदिते भवति भास्वति मामकीन-
हृत्पङ्कजं विकचमाशु मुने विभाति ॥ ३१ ॥

द्वैतस्थितिः प्रविगमं समगाज्जनानां
कोकावलेरिव गतं च कुधीतमिस्रम् ।
योगीन्द्र वाग्मिवर किं त्वमिहागतोऽसि
स्नेहेन मे विविदिषां परिपूरयाशु ॥ ३२ ॥

इत्युक्तवन्तममुमाशु मुनिर्जगाद
त्वं चन्द्रवत्सकललोकविलोकनार्हः ।
मत्स्वान्तकैरवविकासकरोऽसि योगि-
न्भाष्यं त्वदीयमवलोकितुमागतोऽस्मि ॥ ३३ ॥

इत्थं सुभाषितवते मुनये स योगी
प्रादर्शयत्सविनयं कृतसूत्रभाष्यम् ।
दृष्ट्वा तदाधिकरणेषु स तत्र तत्र
ज्ञात्वाशयान्मुदितहर्ष इदं बभाषे ॥ ३४ ॥

भाष्यं महार्थमकरोर्मम सूत्रराशेः
गम्भीरमुक्तिललितं प्रतिसूत्रमेतत् ।
न त्वां विना रचयितुं गुरुणापि शक्यं
श्रीशंकरार्य ननु शंकर एव भासि ॥ ३५ ॥

एवं ब्रुवन्स तमुवाच विवृद्धमायु-
र्भूयात्तव प्रकटयाद्वयशास्त्रमुर्व्याम् ।
इत्याशिषास्य मुदितो निजगाद योगी
त्वद्दर्शनाज्जयतु भाष्यमिदं भुवीति ॥ ३६ ॥

संप्रार्थयन्मुनिरमुष्य पदे ववन्दे
सोऽपि प्रहर्षितहृदन्तरधान्मुनीन्द्रः ।
शिष्येभ्य एव तदनन्तरमात्तहर्षो
भाष्यार्थबोधनपरायण एव रेजे ॥ ३७ ॥

कश्चिद्वटुः समुपगम्य गुरोः पदाब्ज-
युग्मं प्रणम्य निजगाद निजानुदन्तान् ।
चोले जनिर्जनपदे मम देशिकेन्द्र
त्वां तारकं शरणमेमि समुद्धरेति ॥ ३८ ॥

आवेदितः स च तमर्हगुणान्विचार्य
संन्यासमापिपदद्त्त सनन्दनाख्याम् ।
वैराग्यमस्य सुदृढं समवेक्ष्य सूत्र-
भाष्यं तथोपनिषदस्त्रिरपीपठच्च ॥ ३९ ॥

संप्रीतिमान्प्रथमतोऽस्त्ययमेव योगी-
तीर्ष्यां वितेनुरितरे समवेतशिष्याः ।
विज्ञाय तां परतटे स गुरुर्द्युनद्या-
स्तिष्ठन्सनन्दनमथान्तिकमाजुहाव ॥ ४० ॥

संसारसिन्धुमपि तारयितुः समीपं
गन्तारमेव तटिनी किमु मां रुणद्धि ।

इत्याकलय्य दृढमाशु जगाम नद्यां
पद्मान्युपानयदथानुपदं च सास्य ॥ ४१ ॥

ह्रीणा बभूवुरितरे तमवेक्ष्य चित्रं
प्रेम्णो गुरोरुचितमेव च मेनिरे तम् ।
तद्भक्तिभासनकरो जय पद्मपादा-
चार्येति नाम स गुरुस्तदनु व्यतानीत् ॥ ४२ ॥

शिष्यान्समस्तविषयेष्वथ संग्रहीता
संप्राप सैष निगमंप्रथितां त्रिवेणीम् ।
सस्नौ सशिष्यनिवहोऽपि च तत्र तीरे
ऽपश्यत्तुषाग्निशयितं किल भट्टपादम् ॥ ४३ ॥

तस्मा अदर्शयदयं स्वकसूत्रभाष्यं
दृष्ट्वा स तुष्टहृदयो मधुरं तमूचे ।
स्वस्थोऽभविष्यमथ चेत्तव भाष्यमेत-
द्द्राग्व्याकरिष्यमपि तत्सुकृतं न मेऽस्ति ॥ ४४ ॥

शिष्यो ममास्ति मगधेषु स विश्वरूपो
भूमौ प्रसिद्धसुगुणोऽखिलशास्त्रवेत्ता ।
तस्याङ्गना वसति चोभयभारतीति
प्रौढा कलासु सकलासु सरस्वती प्राक् ॥ ४५ ॥

आम्नायविस्वरपदश्रवणात्तहास्या
दुर्वाससा नृजनिशापवती विशापे ।
मानुष्यशंकरसुदृष्ट्यवधिं गृहीत्वा
जाता वधूर्वसति तस्य च तत्र याहि ॥ ४६ ॥

वश्यं करोषि यदि तं कथमप्युपायै-
स्त्वद्भाष्यवार्तिकमसौ रचयेत्कृतीति ।
वाक्यं तदीयमनुमत्य ततः प्रयान्तं
योगीन्द्रमैक्षत स मण्डनमिश्रविद्वान् ॥ ४७ ॥

भट्टान्तिके त्रिगुणवर्धितसप्तवारं
योऽयं पपाठ वरजैमिनिसूत्रभाष्यम् ।
साष्टाङ्गमाशु मुनिराजममुं प्रणम्य
प्रोचे स चारुवचनं विनयेन वाग्मी ॥ ४८ ॥

योगीन्द्र तावकपदे समवेक्ष्य सद्यो
धन्योऽस्मि मामनुगृहाण सहैव नेतुम् ।
उद्धारयाशु भववारिनिधेर्मुदा मा-
मेवं वदन्तमवदन्मुनिराड्दयालुः ॥ ४९ ॥

संशुद्धचित्त सुकृतैर्निजतत्त्वबोधा-
त्सौख्यं परं कलय शीघ्रमिति प्रमोदात् ।
आश्वास्य तं च मगधं गतवान्ददर्श
तं विश्वरूपगृहिणं विबुधाग्रगण्यम् ॥ ५० ॥

आतिथ्यमातनुत सर्वमथैष तस्मै
भिक्षार्थमासयत तं परिवेष्य भोज्यम् ।
हस्तेऽस्य नीरमदितोभयभारती सा
नासौ पपौ न च मुमोच तथैव तस्थौ ॥ ५१ ॥

किं कारणं त्विति विशङ्कितविश्वरूपः
पप्रच्छ तं यदि करोषि मयाथ वादम् ।

सम्यग्जयावधि तदैव समाददीय
हस्ताम्भ इत्युदित आशु तदभ्युपागात् ॥ ५२ ॥

जेत्राश्रमाभ्युपगमे पणबन्धभाजौ
साक्ष्ये विधाय वनितां च गिरोऽवतारम् ।
आरभ्य भुक्तिसमनन्तरकालमेव
मीमांसयोरकुरुतां विबुधौ विवादम् ॥ ५३ ॥

एवं दिनेष्वतिगतेष्वथ सप्तमेऽह्नि
भिक्षां विधत्तमिति तौ सममाह्वयत्सा ।
अन्तर्दधे यतिवरात्मकशंकरस्य
संदर्शनेन परिमुक्तमुनीन्द्रशापा ॥ ५४ ॥

संन्यासमादित जितः कलितोपदेशो
विद्वानमुष्य चरणं शरणं प्रपेदे ।
तत्तादृशं सततकर्मपरं मनोऽस्य
ब्रह्मैकगामि नवनीतमिवाज्यमासीत् ॥ ५५ ॥

भाष्यादिकाखिलकृतीरपि पाठयित्वा
वेदान्तशास्त्रपरिनिष्ठितमातनोत्तम् ।
श्रीतैत्तिरीयमुनिसूत्रगभाष्ययुग्मे
त्वं वार्त्तिके कुरु सुधीरिति चान्वजानात् ॥ ५६ ॥

पूर्वाश्रमे विमतभिक्षुगणः स कार्मो
व्यासस्य जैमिनिरिवेतरथास्ति शिष्यः ।
किं न्वेष वार्त्तिकयुगं विदधीत सान्वि-
त्यन्येऽभिधाय गुरवे यतयो विजघ्नुः ॥ ५७ ॥

तस्मै ततो हृदयरीतिपरीक्षणाय
ग्रन्थान्तरं रचयितुं ददद्भ्यनुज्ञाम् ।
टीकामकारयत साधु सनन्दनेन
भाष्यस्य तां सह च तैरभृणोद्यतीन्द्रः ॥ ५८ ॥

नैष्कर्म्यसिद्धिकृतिमाशु विधाय सोऽपि
ब्रह्मैक्यबोधनपरां गुरवे निवेद्य ।
ते वार्तिके अपि समर्प्य सुरेश्वरार्य-
संज्ञां प्रहर्षितगुरोः कृपया स लेभे ॥ ५९ ॥

त्वद्वार्तिकं प्रथनमेष्यति तस्य टीका
मंक्ष्यत्यथाध्ववनि वत्स्यति पञ्चपादी ।
कालादितीरितगिरं गुरुमत्र पूर्तौ
संप्रार्थनेन सुमतिः समतोषयत्सः ॥ ६० ॥

ऋक्षैरिवामृतकरः सहितः सुशिष्यै
रेवामुपेत्य रुचिरां सुचिरं न्यवात्सीत् ।
अत्रान्तरेऽस्य जरती जननी तनूजं
सस्मार चातुरतया किल दत्तवाचम् ॥ ६१ ॥

विज्ञाय तल्लघु निवास्य समस्तशिष्या-
न्योगात्सवेगमथ जन्मभुवं जगाम ।
स्वीयाननेक्षणजहर्षहृतव्यथाया-
स्तस्याः पदाम्बुजयुगं विनयान्ननाम ॥ ६२ ॥

निर्याणसंनिहितकालमवेत्य मातुः
स ब्रह्म निर्गुणमबोधयदात्महृद्यम् ।

शक्तास्मि नाकलयितुं तदुपात्तमूर्तिं
ब्रह्म स्तुहीति सुधियाथ सुतस्तयोचे ॥ ६३ ॥

कृत्वा तदैव शिवविष्णुभुजंगमुख्य-
स्तोत्राण्यशुश्रवदयं प्रणयान्मनीषी ।
तत्रोदितं विमलचेतसि चिन्तयन्ती
योगीशवद्गतिमविन्दत योगिमाता ॥ ६४ ॥

बुद्ध्वापि बन्धुजनता न तदोक आगु-
र्नाग्निं ददुः परममुं च खला निनिन्दुः ।
प्रोक्षन्कमण्डलुजलैश्चलयञ्शवं च
दक्षात्करादुपचिताग्निरमुं ददाह ॥ ६५ ॥

संस्कृत्य मातरमतीव यतीश्वरोऽयं
तद्देशगानशपतापि जनान्सरोषम् ।
भिक्षा च मा भवतु वो भवने यतीनां
गेहे शवं दहत मास्तु च शिष्टतेति ॥ ६६ ॥

देशे समागतममुं कलयन्महान्तं
द्राग्राजशेखरनृपः सविधं समेत्य ।
तं प्राणमद्गुरुरथैष तमप्यपृच्छ-
त्किं नाटकत्रयमिह प्रथते भुवीति ॥ ६७ ॥

स्वामिन्गतं तदनले बत मे प्रमादा-
दित्युक्तवांस्तदनु कारुणिकः सुमेधाः ।
स्मृत्वा तदैव तदलीलिखदेष चित्रं
यच्छ्रावितं नृपतिना सकृदेव बाल्ये ॥ ६८ ॥

अत्यद्भुतं तदवयन्नृप इत्यवादी-
स्त्वत्किंकरोऽस्मि सुनियुङ्क्ष्व मुने विधेयम् ।
शप्तास्तु कारटिपुरेऽथ यथा मयामी
कार्यास्तथैव भवतेत्यशिषद्यतिस्तम् ॥ ६९ ॥

अद्यापि तत्र सफलोऽस्ति तदीयशाप
उक्तं महद्भिरफलं न कदापि लोके ।
इत्थं विधाय यतिराडखिलं विधेयं
छात्रप्रतीक्ष्यथ फलाद्यशनैरुवास ॥ ७० ॥

ततः सुब्रह्मण्याद्यमरनिलयेषु प्रविचर-
न्ततः स्वैरं हर्षादपि जनपदांस्तौलवमुखान् ।
पवित्रीकुर्वाणः परशिव इवाशेषविनुतो
मतिश्रीसाम्राज्ये व्यजयत महाञ्शंकरगुरुः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यादिविरुदावलीविराजित श्रीमन्नृसिंहभारती करकमलसंजातसकलविद्याविशारदपंडितपुण्डरीकमण्डलीमार्ताण्ड श्रीसच्चिदानंदभारतीमुनीन्द्रनिर्मापिते विद्वद्बालकलक्ष्मणशास्त्रिविरचिते गुरुवंशे महाकाव्ये द्वितीयः सर्गः ॥

---

# विशेषसूचना

द्वितीयसर्गे २१ तमे श्लोके —

श्रीगौडपादचरणाः कुरुक्षेत्रगत हीरावती नदीतीरभव गौडजातिश्रेष्ठाः देशविशेषभवजातिनाम्नैव प्रसिद्धाः ॥

—बालकृष्णानन्दसरस्वती

इमे च गौडपादाचार्याः शताधिकान् संवत्सरान् वदरीक्षेत्रे तपश्चेरुः। ईश्वरकृष्णप्रणीतसांख्यकारिकाणां भाष्यमेव प्रथमत एतैर्विरचितम्। एतच्च चीनदेशे टङ् (Tang) राजवंशीयाधिकारसमये चीनभाषायामनूदितम्। "७८० तमे क्रैस्तवाब्दे गौडपादाचार्यैः माण्डूक्यकारिका प्रणीता" इति डाक्टर् सर्वपल्लि राधाकृष्णमहोदयानामाशयः।

द्वितीयसर्गे ४५, ४७ तमश्लोकयोः —

कुमारिलभट्टवाक्यानुसारेण विश्वरूपेण साकं विवादं कर्तुं गच्छन्तं श्रीशंकरभगवत्पादं साष्टाङ्गं प्रणम्य संप्रार्थितवान् मण्डनमिश्रनामकः कश्चन विद्वान् स्वस्मै अनुग्रहं कर्तुम्। श्रीभगवत्पादाश्च तं समनुगृह्य पश्चात् विश्वरूपं द्रष्टुं मगधमगमन् इति अत्र प्रतिपादितम्। अनेन ब्रह्मसिद्धिप्रणेता विद्वान् मण्डनमिश्रः (४७ तमे श्लोके उक्तः) अन्यः, सुरेश्वर इति भगवत्पादसकाशात् लब्धसंन्यासनामा नैष्कर्म्यसिद्धिकृत् विश्वरूपः (४५ तमे श्लोके उक्तः) अन्य इति स्पष्टमेव ज्ञायते। किंच नैष्कर्म्यसिद्धि-ब्रह्मसिद्धि-प्रतिपादितयोर्विषययोः परस्परं विरोधो बहुत्र दृश्यते इत्येतत् विदुषां न तिरोहितम्। अतो द्वयोरपि नैकः कर्ता संभवेत्। 'मण्डन' इत्येतत्व तस्मिन् काले प्रसिद्धविद्वद्भ्यो महाराजसभायां सत्कारपूर्वकं प्रदत्तं बिरुदं स्यात्॥

द्वितीयसर्गे ४५, ५० तमश्लोकयोः —

मगधदेशे विश्वरूपं दृष्ट्वा तेन साकं विवादमकुर्वन् श्रीशंकराचार्याः इति अस्मिन् गुरुवंशकाव्ये प्रतिपादितम्। अयं च विश्वरूपः मैथिल-

वंशोत्पन्नः । अस्य पिता हिममित्रः काश्मीरमहाराजसभायां प्रसिद्धपण्डितो व्यराजत । विहार (Bihar) राज्यान्तर्गतद्‍भङ्गानगरसमीपे 'सहर्सा' इति कश्चन ग्रामो वर्तते । अत्रैव विश्वरूपः उभयभारत्या सहोवास । अत्रैव च श्रीशंकराचार्यविश्वरूपयोः शास्त्रविवादः समभूत् इति बहूनामाशयः । केचित्तु नर्मदातीरे इदानीं 'माहेश्वरी' अथवा 'महेश्वर्' इति व्यवह्रियमाणे माहिष्मतीनगर एव विवादः समभूत् इति अभिप्रयन्ति ॥

## NOTES

V 21. Gauḍapāda, a Gauḍ Brāhman, was born on the banks of the Hirāvatī river near Kurukshetra and lived for more than hundred years in Badri. His earliest work, a bhāṣya on Īśvarakṛṣṇa's *Sāmkhya kārika* was translated into Chinese durirg the T' ang dynasty. Dr. Sarvapalli Radhakrishnan thinks that Gauḍapāda composed his *Māṇḍūkhya kārika* about A. D. 780.

V 45 and 47 ff. It is evident from these verses that Maṇḍana Miśra, author of *Brahmasiddhi*, and Viśvarūpa, who became Sureśvarāchārya, were two different persons. Scholars have pointed out that the views expressed in the *Brahmasiddhi* of Maṇḍana and those of Sureśvarācharya in the *Naiṣkarmya siddhi* differ in several respects. *Maṇḍana* seems to have been an honorific title.

VV 45 and 50 indicate that Śri Śankara met Viśvarūpa at Magadha. The family of Miśras to which Viśvarūpa belonged hailed from Mithila. Viśvarūpa Maṇḍana was a son of Hima Mitra who was a courtpoet in Kashmir. The place of Śri Samkara's encounter with Viśvarūpa is identified as Saharsā near Darbhanga in Behar. There is another school of thought which says that the place was Māhiṣmatī or Mahēśvari (or Mahēśvar) on the Narmadā.

## तृतीयः सर्गः ॥

श्रीशंकराचार्यजगद्गुरुं तमन्विष्य सर्वोऽपि च संदिदृक्षुः ।
समागतः शिष्यगणः सहर्षमालोक्य तत्पादयुगं ववन्दे ॥

सर्वेषु शिष्येष्वपि सान्त्वितेषु सगद्गदं प्राह स पद्मपादः ।
आयानकाले भवनं गतोऽस्थां पूर्वाश्रमे मातृसहोद्भवस्य ॥

स्नेहेन चादर्शयमार्य टीकां तुष्टाव धूर्तश्चिखिदे च चित्ते ।
मत्स्थापितं पुस्तकमेष दृष्ट्वा सेर्ष्यः स्वमप्याशु गृहं ददाह ॥

मह्यं ददौ मान्द्यकरं दुरात्मा गरं च भैक्ष्ये बहु किं ब्रवीमि ।
स बालिशः पुस्तकहारकोऽभूत्कृतापराधोऽस्मि गुरो सहेति ॥

एवं मुनीन्द्रो गदितोऽमुना प्रागाकर्णितामादिमपञ्चपादीम् ।
स लेखयामास दयार्द्रचेताः सैव प्रसिद्धा भुवने बभूव ॥ ५ ॥

संप्राप्तसंतोषतदादिशिष्यैः साकं जगत्यां विजयं विधित्सुः ।
अद्वैतसिद्धान्तसरोजसूर्यो मध्यार्जुनेशावसथं ययौ सः ॥ ६ ॥

तं पूजयित्वानुचरैः सभायां पप्रच्छ तत्त्वं किमिहेति योगी ।
दृश्याकृतिप्रोच्चभुजोऽथ सत्यमद्वैतमेवेत्यवदत्त्रिरीशः ॥ ७ ॥

संमानितस्यास्य बुधैस्तदानीं शिष्या अभूवंस्तत एव भूरि ।
स्थलेषु सल्लीलमनन्तशायिपुर्यादिमेष्वन्यमतान्यजैषीत् ॥ ८ ॥

श्रीरामसेतुं गतवान्यतीन्द्रः स्नात्वा धनुष्कोटिसुतीर्थराजे ।
रामेश्वरं दाशरथिप्रसन्नं संपूज्य देवं सममानि शिष्यैः ॥ ९ ॥

स तौलवग्रामवरं प्रतीतं श्रीरौप्यपीठाख्यपुरं प्रपेदे ।
श्रीमाननन्तेश्वरमर्चयित्वा चन्द्रेश्वरं चारु मुनीन्द्र आर्चत् ॥

तदालये विश्रमिणं यतीन्द्रमादाय बालं जननादिमूकम् ।
एत्य द्विजः कश्चिददर्शयत्तमावेदयंस्तज्जनितं स्वमाधिम् ॥ ११ ॥

दयानिधिस्तं प्रणयेन बालमागाः कुतस्त्वं च क इत्यपृच्छत् ।
प्रौढार्हतत्वार्थवचोभिरेव प्रत्युत्तरं सोऽप्यवदत्कुमारः ॥ १२ ॥

आश्चर्यवेत्तानुपमं वटुं तमादाय संन्यासमदत्त युक्तम् ।
अदाच्च हस्तामलकेति नाम यत्तेन हस्तामलकीकृता चित् ॥

संचारतः स्वैरमथाब्धितीरे भगन्दरस्तद्गुरुदेहमाप ।
कश्चिद्विनेयोऽस्य गुरोर्निषेवां विशेषतो भक्तिवशाच्चकार ॥ १४ ॥

धत्ते जुगुप्सां न कदापि सेवास्वावश्यकं किंचन नातियाति ।
अज्ञस्य तस्यापि मुखात्कदाचिद्विनिर्गतं तोटकवृत्तजातम् ॥

आकर्ण्य तां चित्रकृतिं यतीन्द्रः संन्यासदानेन तमन्वगृह्णात् ।
यत्तन्मुखात्तोटकवृत्तमागात्तत्तोटकाचार्यसुनाम चक्रे ॥ १६ ॥

भगन्दरस्यास्य चिकित्सका न दक्षाः क्षिताविरत्यवबुध्य शिष्यैः ।
औदास्यहानेऽर्थित एव मन्त्रैर्नासत्ययुग्मं स तदाचकर्ष ॥

दस्रौ मनुष्येष्वचिकित्स्यकौ तौ संकोचतः प्रोचतुरेतदिन्द्रम् ।
अदापयद्देवगुरुस्तदाज्ञां नृशंकरत्वं कलयंस्तदाभ्याम् ॥ १८ ॥

आचार्यदेहस्य निरामयत्वं तावागतौ चक्रतुरञ्जसैव ।
आशीःप्रदानाधिगतप्रमोदौ तौ जग्मतुर्लोकहितौ पुरीं स्वाम् ॥

गोकर्णयात्रां स विधाय योगी सह्याद्रिमासाद्य सचेदपादम् ।
वराहदंष्ट्रोद्भवतुङ्गभद्रामूले व्यधादाह्निकमादरेण ॥ २० ॥

विभाण्डकस्याश्रममाप्य तुङ्गभद्रातटेऽपश्यदयं विचित्रम् ।
प्रसार्य भोगं भुवि रक्ष्यमाणं तच्छायया भोगिवरेण भेकम् ॥

निर्वैरसत्त्वं कलयन्स्थलं तच्चित्ते चकारात्मनिवासयोग्यम् ।
श्रीशैलशेषाचलनारसिंहगिरीन् जगन्नाथमथो जगाम ॥ २२ ॥

वाराणसीं योगिवरोऽधिगम्य भुजैरिव श्रीहरिरेष शिष्यैः ।
सहात्मना पञ्च मठानमीषां प्रकल्प्य तस्थौ कतिचिद्दिनानि ॥

ततः स काश्मीरमुपेत्य देशं श्रीशारदागारचतुर्दिशासु ।
द्वारेषु जित्वा विदुषां प्रवेशं प्राच्यं निशम्याशु जगाम तत्र ॥

तद्दक्षिणद्वारि बुधाः वसन्तः शास्त्रेषु पप्रच्छुरथैकमेकम् ।
दत्तोत्तरे सर्वविदादिलोके मार्गप्रदर्शिन्यपि तद्विवेश ॥ २५ ॥

सर्वज्ञपीठं द्रुतमारुरुक्षौ तस्मिंस्तदाभूदशरीरवाणी ।
दद्याः परीक्षामखिलासु विद्यास्वारोह पीठं परथा तु नेति ॥

दित्सामवेत्यास्य यतीशवाण्योः मध्ये बबन्धुः प्रतिसीरिकां ज्ञाः ।
कलासु सर्वासु परीक्ष्य देवी पप्रच्छ वात्स्यायनशास्त्र एतम् ॥

दिनानि कान्यप्यवधिं तदुक्त्यै याचन्प्रमीतामरुकेन्द्रकायम् ।
प्रविश्य योगाद्बुभुजे स भोगांश्चक्रे कृतिं चामरुकं तदर्हम् ॥

शङ्कां प्रविज्ञाय तदा महिष्यास्तद्देहमुत्सृज्य निजं प्रविश्य ।
स्तुत्वा नृसिंहं पुनरेत्य देवीं पृष्टस्तया कामकलामवोचत् ॥

तुष्टा वरं ब्रूहि सुनेत्यवादीत् यतेस्तु मे को नु वरोऽस्त्यथापि ।
याचे सहैवाम्ब मयागमं ते श्रीऋश्यशृङ्गाश्रम इत्यगादीत् ॥

तथेति साकं चलता चलन्ती वरोक्तिवश्या तमियाय वाणी ।
श्रीतुङ्गभद्रातटरम्यभागे तामर्चयामास स शंकरार्यः ॥

शिष्यैश्चतुर्भिः सह तत्र विद्याभ्यासङ्गशीलः स चिरं न्यवात्सीत् ।
विलोक्य यस्यास्य सभां जनौघो जगाद पञ्चास्यसमं ब्रुवीति ॥

श्रीचन्द्रमौलीश्वरलिङ्गमस्मै सद्रत्नगर्भं गणनायकं च ।
स विश्वरूपाय सुसिद्धदत्तं दत्त्वा न्यगादीच्चिरमर्चयेति ॥

सुरेश्वराचार्य सरस्वतीं त्वं संपूजयन्नास्स्व चिरादिहेति ।
दत्त्वाभ्यनुज्ञां विनताय तस्मै शिष्यैः समस्तैः स जगाम काञ्चीम् ॥

ईशानविष्ण्वोरभिधानयुग्मात्काञ्चीनगर्यौ समकारयत्सः ।
कामाक्ष्यभिख्यारमणीयमूर्तेर्देव्याः प्रतिष्ठां मुनिराडकार्षीत् ॥

शैवादयः पञ्चमिनो यतीशं संप्रार्थ्य तं स्वस्वमतोदयाय ।
अनुग्रहं प्राप्य जगद्गुरोश्च ते प्रस्थिताः स्वस्वमतप्रवीणाः ॥

ततः स गत्वा बदरीवनं तच्छिष्यैः समेतो यतिसार्वभौमः ।
तत्र स्थितः कान्यपि वासराणि स्वप्ने हरिं प्रैक्षत सुप्रसन्नम् ॥

मूर्तिर्मदीया सलिलेऽत्र मग्नास्त्युद्धृत्य तां संपरिपूजयेति ।
तदुक्तिमाकर्ण्य तथा विधाय नारायणं तं समपूजयच्च ॥ ३८ ॥

अत्रापि देवं नियमेन तस्मात्समागतः केरलनामदेशात् ।
पौर्वाश्रमः स्वो जन एव चास्य तदा तदा पूजयति प्रसिद्धम् ॥

तद्दालयं कारयितुं स पद्मपादं नियम्याशु जगाम काशीम् ।
गुरोरनुज्ञां शिरसानुमोद्य तन्मन्दिरं द्राङ्निरमापयत्सः ॥ ४० ॥

ततः कदाचिन्नृपतेरगारं गतः स भिक्षां त्वरितं ययाचे ।
आलोचयज्ज्येष्ठवधूर्नृपस्य सांसारिकावश्यककार्यधुर्या ॥ ४१ ॥

अथालये कण्वमयं महात्मा स्नातुं गतो नेह नृपः स एनम् ।
वीक्ष्याह्वयेदित्यथ सा तटिन्यां स्नात्वा समेहीत्यवदद्यतीशम् ॥

विचार्य दूरां स नदीं क्षुधार्तो बहिः समेत्योन्नतगण्डशैले ।
दण्डेन घातद्वयमाततान धाराद्वयं निःसृतमाशु तस्मात् ॥ ४३ ॥

स्नात्वाऽथ तत्राम्भसि योगिवर्यो भिक्षार्थमागत्य गृहे न्यषीदत् ।
आश्चर्यचित्कण्वकृतेन तेनाप्यन्नेन भिक्षामदित द्रुतं सा ॥ ४४ ॥

अत्रान्तरे सोऽपि गृहं समागान्निमन्त्रितैर्विप्रवरैः सहैव ।
अश्रावयत्तं च कनिष्ठभार्या द्वेषात्सपत्नीकृतकण्वनाशम् ॥ ४५ ॥

कोपेन खड्गं परिगृह्य राजा तं हन्तुकामः करमुद्दधार ।
संदर्शितश्रीनरसिंहरूपो हस्तं तदाऽस्तम्भयदस्य योगी ॥ ४६ ॥

तुष्टाव चैनं नृपतिस्तदा तत्तुष्ट्यै नृसिंहाय जनं विभाव्य ।
स्वमन्दिरं चास्य समर्चनाय समर्पयामास समस्तराज्यम् ॥ ४७ ॥

तदैव काशीनगरोषितः स श्रीशंकराचार्यमुनिर्विशेषात् ।
श्रीभैरवोपासकभैरवाख्यविप्रेण धूर्तेन चिरं न्यषेवि ॥ ४८ ॥

बलेः प्रदानादचिरात्प्रसीदेच्छ्रीभैरवस्त्वेककपालमूर्ध्नः ।
इत्येवमालोच्य तमस्य मत्वा ग्रहीतुमेनं समवञ्चयत्सः ॥ ४९ ॥

शुश्रूषयैवातितरां प्रसन्नं कदाचिदेनं कठिनाशयः सः ।
दित्से बलिं देशिक भैरवाय भवच्छिरो मे वितरेत्यवोचत् ।।५०।।

उदारचेता अथ शंकरार्यः आलोचयद्दिग्विजयं प्रपूर्णम् ।
परोपकाराय शरीरमेतत्प्रयात्विति द्रागुररीचकार ।। ५१ ।।

नीत्वा स तं निर्जन एव धूर्तो वने प्रशान्तं निजभैरवेशम् ।
समर्च्य खड्गं निशितं करेण धृत्वा शिरश्छेत्तुमनाः पुरोऽस्थात् ।।

नृसिंहदेवायतने तदैव ध्यायन्गुरुं चेतसि पद्मपादः ।
विज्ञाय योगात्तदिदं नृसिंहाविष्टो रुषास्याशु समीपमाप ।। ५३ ।।

तेनैव खड्गेन तमेव विप्रं छित्वा क्षणादस्य पुरो ननर्त ।
कोलाहलत्यक्तसमाधिरेषः स्तुत्या नृसिंहं व्यतनोत्प्रसन्नम् ।। ५४ ।।

ततस्तयोरद्भुतवृत्तभाजोः स्तोत्रं वितेने सकलैश्च शिष्यैः ।
तैः साकमागाद्बदरीवनं स नारायणागारविलोकनाय ।। ५५ ।।

संपूज्य नारायणमादरेण प्रेमोदयामोदितपद्मपादः ।
देवं त्विमं केरललोक एव संपूजयत्वित्यपि सोऽन्वजानात् ।।

ततो नृसिंहायतनं समेत्य संजातमाकर्ण्य समस्तवृत्तम् ।
माहात्म्यनिर्भक्तवरात्स भूपादन्वग्रहीद्भूरितरां सपर्याम् ।। ५७ ।।

तुष्टस्तया देशिकसार्वभौमः श्रीचक्ररीत्या विततं कृतेऽस्य ।
निर्माप्य च श्रीनगरं महात्मा पट्टाभिषेकं वितताम तस्मिन् ।।

संमानितस्तेन स शंकरार्यः श्रीपद्मपादं मुनिमन्वभाणीत् ।
ऐन्द्र्यां दिशि त्वं निजसंप्रदायप्रवर्तको लोकगुरुर्भवेति ।। ५९ ।।

तदाज्ञया पद्मपदार्ययोगी चक्रे जगन्नाथमठे निवासम् ।
सुरेश्वराचार्ययतिः पुरैव तच्छासनादस्ति स शृङ्गपुर्याम् ॥ ६० ॥

गुरुः स हस्तामलकं यतीन्द्रं न्ययूयुजत्पश्चिमदिग्विभागे ।
स द्वारकायां न्यवसद्यतीन्द्रो गुरोर्गिरा चारु मठं विधाप्य ॥

तं तोटकाचार्यमथोत्तरस्यामाज्ञाप्य दिश्याप मुदं स योगी ।
स चोपकण्ठं बदरीवनस्य ज्योतिर्मठे तद्वचनादवात्सीत् ॥ ६२ ॥

यातुं समादिश्य चतुर्दिशासु यतीश्वरोऽयं चतुरोपि शिष्यान् ।
सिद्धेश्वरीं सिद्धनुतां दिदृक्षुः चचाल नेपालविशालदेशे ॥ ६३ ॥

स्वाङ्के मुनिं साप्युपवेश्य वाक्यैः सुधोपमैः स्कन्दमिवाममर्श ।
सेर्ष्यं समालोक्य स सिद्धसंघस्तयोरुपर्येव शिला ववर्ष ॥ ६४ ॥

तां वृष्टिमस्तंभयदस्य योगी प्रावारयत्ताश्च शिलाः परीताः ।
विभाति चाद्यापि तथैव चित्रं व्यर्थश्रमः सिद्धगणो बभूव ॥

सिद्धेश्वरीं चारु तदा ययाचे तक्रं पिपासुर्जननीमिवैषः ।
आस्फालितात्मोरुरजीजनत्सा तक्रापगां सा प्रथिताधुना सा ॥

मत्वा यतीन्द्रः कृतकृत्यभावं महत्समाभाषगमाप्तुकामः ।
स्वच्छन्दचारी मुनिराजदत्तात्रेयस्य रम्याश्रममाजगाम ॥ ६७ ॥

औकं समस्तान्यपि पुस्तकानि शिष्यानशेषानपि तानमुञ्चम् ।
आस्तामिमौ दण्डकमण्डलू चेत्यालोच्य तत्याज स तौ च योगी ॥

दण्डो द्रुरूपेण स पर्यणंसीत्तीर्थात्मना चाम्बु कमण्डलुस्थम् ।
महात्मनो हस्तपरिग्रहेण जडौ च तौ सार्थतनू अभूताम् ॥ ६९ ॥

दत्तात्रेयं भुवनविनुतं वीक्ष्य नत्वा न्यगादी-
द्वृत्तं स्वीयं सकलमपि तान्प्रेषितान्दिक्षु शिष्यान् ।
सोऽपि श्रुत्वा मुनिपतिरदादाशिषो विश्वरूपा-
चार्यादिभ्यः सुखमवसतां तत्र तौ भाषमाणौ ॥ ७० ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यादि बिरुदावलीविराजित श्रीमन्नृसिंहभारती करकमलसंजातसकलविद्याविशारदपंडितपुण्डरीकमण्डलीमार्ताण्ड श्रीसच्चिदानंदभारतीमुनीन्द्रनिर्मापिते विद्वद्बालकलक्ष्मणशास्त्रिविरचिते गुरुवंशे महाकाव्ये तृतीयः सर्गः ॥

---

## विशेषसूचना ॥

३ सर्गे २३ तमे श्लोके —

श्रीशङ्करभगवत्पादाः शिष्यैश्चतुर्भिः सह वाराणसीं गत्वा आत्मनः चतुर्णां शिष्याणां च पञ्च मठान् प्रकल्प्य कतिचित् दिनानि तत्र न्यवसन् इति वर्णितमस्मिन् श्लोके । एतच्च पञ्चमठप्रकल्पनं शिष्याणामात्मनश्च पृथक् पृथगेकान्तनिवासाय, ध्यानाद्यनुष्ठानसौकर्याय च । अतः नैतस्य श्लोकस्य आम्नायमठस्थापनपरतया अर्थो वर्णयितुं शक्यते । अनेनैव ज्ञायते यतीनां पृथक्पृथक् निवास एव शास्त्रसंमत इति । किञ्च चतुर्दिक्चतुराम्नायप्रतिष्ठापनं, तत्र शिष्यनियोजनं चास्मिन्नेव सर्गे उत्तरत्र (५९ प्रभृति ६३ पर्यन्तेषु श्लोकेषु) अनुवर्णितं दृश्यते ॥

३१ तमे श्लोके —

तुङ्गभद्रातीरस्थशृङ्गगिरिपवित्रक्षेत्रे श्रीशारदाम्बामूर्तिं प्रतिष्ठाप्य भगवत्पादाः स्वयमेव पूजयामासुरिति वर्णितमस्मिन् पद्ये ॥

३२ तमे श्लोके —

शिष्यैः साकं श्रीशंकराचार्याः शृङ्गाचले चिरं न्यवसन् इति वर्णित-मत्र। चिद्विलासीये तु 'चतुर्दश समाः' इति स्पष्टमभिहितं। क्वचित्तु द्वादश समाः इति उक्तम्।

४१—५८ श्लोकेषु :—

इयं च कथा हिमाचलप्रान्तनिवासिजनेषु इदानीमपि प्रसिद्धा वर्तते। अत्र वर्णितं श्रीनगरं बदरीक्षेत्रमार्गे अलकनन्दातीरे वर्तते। इदानीं काश्मीर-देशे विद्यमानं श्रीनगरं तु ततोऽन्यत्॥

## NOTES

**V 23.** It is obvious that the *five maṭhs in* Vārāṇasi were intended to serve as private residences for Śri Saṅkara and his four disciples — places for them to rest, meditate etc. The four āmnāya maṭhs *in the four directions of India*, each presided over by one of his four disciples, are referred to below (v 59–63).

**V 31.** Note that Śrī Saṅkara installed Śrī Śārada Dēvī on the banks of the Tuṅgabhadrā, and himself worshipped Her.

**V 32.** It has been said that Śrī Śaṅkarā stayed in Sriṅgēri for about twelve years.

**VV 41 to 58.** This anecdote is still current among the Himalayan folks. Śrinagar (different from the city of the same name in Kashmir) is situate on the banks of the Alakanandā on the road to Badrināth.

## ॥ विशेषसूचना ॥

३ सर्गे ३२ तमे श्लोके —

अस्मिन् श्लोके निर्दिष्टः 'सुसिद्धः' श्रीगोविन्दभगवत्पादाचार्य एव, न तु द्वादशशताब्दीभवः वीरशैवाचार्यः रेवणसिद्धः,

शिवात्क्रमात्समायातं चन्द्रमौळीश्वरं परम् ।
रत्नगर्भं गणपतिं पूजयेति ददौ मुदा ॥

इति चिद्विलासीयश्लोकें 'गुरुपरंपराक्रमेण स्वहस्ते समायातं श्रीचन्द्रमौळीश्वरं श्रीशंकराचार्याः श्रीसुरेश्वराचार्याय ददुः' इति स्पष्टमभिहितत्वात् । रेवानदीतीरवासात् गोविन्दभगवत्पादस्यापि 'रेवण' नाम्ना व्याख्याने निर्देशोपि संगच्छते । नर्मदानदीपर्यायभूतरेवाशब्दात् 'लोमादिपामादिपिच्छादिभ्यः शनेलचः' इति सूत्रेण नप्रत्यये तस्य च णत्वे 'वा' इति दीर्घस्य ह्रस्वे च कृते रेवणशब्दनिष्पत्तिः । एवं च रेवणशब्दः गोविन्दभगवत्पादवाचकः । वीरशैवाचार्यः रेणुकाचार्यापरनामकः रेवणसिद्धस्तु न श्रीशंकरभगवत्पादसमकालिकः । आराध्यैः वीरशैवैश्च पूज्यमानः सः रेवणसिद्धः अस्मिन् काव्ये पञ्चमसर्गे षष्ठसर्गे च निर्दिश्यते ॥

---

# NOTES

Susiddha mentioned in III 33 is said to be Rēvaṇa in the commentary (not published in this edition). He must obviously be different from the Rēvaṇa of the 12th century referred to in V 59 and VI 2. Rēvaṇa is he who pertains to Rēvā,–a name of the river Narmadā. The former Rēvaṇa is therefore Śrī Govinda Bhagavatpāda who lived on the banks of the Narmadā. The latter is the Śaiva āchārya of the *parampara* honoured by the Ārādhyas and Vīra Śaivas.

---

# चतुर्थः सर्गः ॥

अथास्य लोकैकगुरोरनुज्ञया सुरेश्वराचार्ययतीश्वरो महान् ।
स तुङ्गभद्रातटिनीतटे मठे जगत्प्रतीते जयकृच्चिरं बभौ ॥ १ ॥

सुमानसोल्लासकृते विनिर्ममे स मानसोल्लासमुखा बहूः कृतीः ।
सुरेश्वराचार्यसमानतां ततः सुरेश्वराचार्ययतीश्वरो दधे ॥ २ ॥

परात्मनः शास्त्रगविश्वरूपतामबोधयद्बोध्यनिबोधको मुहुः ।
मनीषिलोकान्सुमनीषितां ततो नाम्नापि संप्राप स विश्वरूपताम् ॥

बभौ सदानन्दनवाङ्गतक्रतुर्महीसुरेशः सुरभिश्रिया युतः ।
मनोहरश्रीकरकल्पभूरुहः सहस्रदृष्टिः सुचिरं सुरेन्द्रवत् ॥ ४ ॥

चिरं व्यवस्थाप्य विचारकोविदो वर्णाश्रमाचारविधीन्सुधीनुतः ।
अन्वग्रहीच्छात्रवरं विचक्षणं मुनीश्वरो बोधघनाभिधं मुनिम् ॥

पराशराद्व्यास इवाधिकं बभौ सुरेश्वराचार्ययतीश्वरादयम् ।
विराजितां बोधघनाभिधां स्विकां धरातलेऽन्वर्थतया व्यभासयत ॥

दिनान्यनेकानि विनीय मौनिराट् सनातनं स्वानुभवं प्रकाशयन् ।
भजज्जनाभीष्टदपूर्णवैभवो निजे पदे ज्ञानघनं न्यवासयत् ॥ ७ ॥

अनारतज्ञानघनोक्तिशोभितः पिनाकिनः पूजनमाचरंश्चिरात् ।
जनार्दनादीनपि मानयन्सुरान्निनाय सद्धर्मपथं जनानयम् ॥ ८ ॥

ज्ञानोत्तमोपेतशिवाभिधानकं सोऽन्वग्रहीच्छिष्यवरं विचार्य तम् ।
ज्ञानेन साधूत्तमतामवाप्तवान्ध्यानेन साक्षाच्छिवरूप एव यः ॥९॥

शिष्योत्तमं ज्ञानगिरिं महामनाः स आददे सर्वजनानुकम्पिनम् ।
छात्रावगाह्योत्तमबोधवाग्झरीविलासमूलं स मुनिर्बभौतमाम् ॥१०॥

बभूव तस्याथ करांबुजोद्भवो गुणाचलः सिंहगिरीतिनामवान् ।
विद्वन्मृगेन्द्रैर्जितवादिकुञ्जरो विद्यामणीरोहण एष शुभ्यभात् ॥

चिरं जनान्धर्मपथे नियन्त्रयन्सोऽन्वग्रहीदीश्वरतीर्थयोगिनम् ।
यदीश्वरोऽयं सुकृतप्रवर्तने तीर्थात्मकोऽभूदपि लोकपावने ॥१२॥

तदीयहस्तांबुजसंभवो बभौ नृसिंहतीर्थाह्वयदेशिकोत्तमः ।
हंसस्थितिश्रीश्चतुराननः स्वयं विरिञ्चिवद्वैदिकमार्गपालकः ॥१३॥

जित्वा सर्वान्वादिलोकान्मतं स्वं
प्रोद्भास्योर्व्यां सोऽनुजग्राह शिष्यम् ।
श्रीमान्विद्यातीर्थसंज्ञं यतीन्द्रं
छात्रस्तोमैः सेवितं कीर्तिसान्द्रम् ॥ १४ ॥

भूमौ धर्मोद्धारको भूरिकालं व्याचक्षाणः सर्वशास्त्राण्यथैषः ।
स्तुत्यो नित्यं भासुरैर्भूसुरेन्द्रैर्नीतिप्राज्यं योगराज्यं शशास ॥

प्रौढोऽभेत्सीद्वादिशैलेन्द्रपक्षान्स्फूर्जच्छात्रप्राज्ञवाग्वज्रसंघैः ।
सोऽयं भूमीनिर्जरेन्द्रो नितान्तं न स्यात्कस्याभिज्ञलोकस्य मान्यः ॥

पादौ यस्य च्छत्रवज्रध्वजाद्यप्रोद्यद्रेखौ चिन्तयन्तोऽपि सन्तः ।
राजन्त्येकच्छत्रसाम्राज्यवन्तः किं तद्वर्ण्यं राजमान्यत्वमस्य ॥

पारंपर्येणाध्वरानादधानैः शिष्यैरस्य प्राप शक्रोऽपि साम्यम् ।
कामं सोमं प्राप्तुमत्रैव यस्मादासीद्वासी सोऽपि साकं स्वलोकैः ॥

मन्त्रांस्तन्त्राण्यत्र यन्त्राणि मन्ता ध्याता प्रीतां सारदां शारदाम्बाम् ।
हृद्यं विद्यातीर्थनामाप सोऽयं नानार्थो यत्तीर्थशब्दोऽन्वितार्थः ॥१९॥

श्रीमांस्ततः सिंहगिरौ मुनीश्वरः पुरा तदाख्यानयतीन्द्रसेविते ।
तपोवने मौनिघनेऽतिपावने तेने तपो रौप्यगिराविवेश्वरः ॥ २० ॥

अत्रान्तरे सुरुचिरैकशिलानगर्यां कस्यापि भूसुरवरस्य सुतौ विनीतौ ।
दस्राविव प्रतिदिनप्रचुरानुरागौ ख्यातौ गुणैश्च बलरामहरी इवास्ताम् ॥

विद्वांस्तयोरपि विरागभरात्कनीयां-
स्तीर्थेक्षणोत्सुकमनाः प्रचरन्पृथिव्याम् ।
तीर्थात्मकोन्नततपस्विवरेण्यविद्या-
तीर्थाभिधानमुनिराजसमीपमागात् ॥ २२ ॥

निर्जेतारं षड्रिपुवर्गान्कुनिसर्गान्संधातारं चेतसि मैत्र्याद्यनुभावान् ।
निर्भेत्तारं क्लेशविशेषान्बहुदोषान्निर्णेतारं मुख्यमहावाक्यगभावान् ॥

जापं जापं सिद्धिदमन्त्राननुरुयन्त्रांस्तापं तापं भूरितपांसि प्रयशांसि ।
वारं वारं शंभुपदांभोरुहपूजां कारं कारं तापसधर्मैर्विजितोर्मिम् ॥ २४ ॥

काले काले स्वाश्रमकर्माण्यपि धर्मान्सर्वाननुर्व्यां कारयितारं सविचारम् ।
ध्यायं ध्यायं ब्रह्म परं तत्स निरन्तं लीनं नूनं शान्तरसे तं च ददर्श ॥

नमोऽस्तु भवते गुरो नतजनेप्सितद्योतरो
नमो वरतपोनिधे नुतगुणानुकम्पांबुधे ।
समीक्ष्य समुपागतं सपदि मां त्वदेकाश्रितं
समुद्धर महामते परशिवप्रसन्नाकृते ॥ २६ ॥

इत्थं नामं नाममत्यादरेणासन्नं धन्यं भूरिशुश्रूषणेच्छुम् ।
हृष्टो दृष्ट्यान्वग्रहीदेष शीघ्रं मार्कण्डेयं मारवैरीव विप्रम् ॥ २७ ॥

अपृच्छदेनं मृदुवाङ्मुनीन्द्रस्त्वं कोऽसि किं न्वत्र समभ्युपागाः ।
संप्राप्तुकामः किमु सांप्रतं मद्ब्रूहीति वात्सल्यसमन्वितोऽसौ ॥ २८ ॥

संसारे बहुलतरश्रमैरसारेऽवस्थातुं सह इह सर्वथापि नाहम् ।
संन्यासाश्रममथ देहि मे महात्मन्नित्येवं स किल तमर्थयाञ्चकार ॥

सदयमथ विधाय वर्यतुर्याश्रमिणममुं निगमान्तवाक्यजातम् ।
अखिलमुपदिशन्निषेव्यमाणश्चिरममुना स मुनिर्मुदं प्रपेदे ॥ ३० ॥

भारतीकृष्णयोः सद्गुणैः साम्यतो भारतीकृष्णतीर्थेति विद्योतिताम् ।
योगपट्टाभिधां योगिराजादयं प्राप्य तत्संगतः शृङ्गपुर्यां बभौ ॥३१॥

भ्राताकस्मिकविप्रकर्षमसहञ्ज्यायान्द्विजाग्र्यात्मजः
कुर्वन्नेकशिलापुरेण च स तं देशेषु तीर्थेष्वपि ।
भूयोऽन्वेषयिताथ शृङ्गनगरे कर्मन्दिराणमन्दिरे
च्छात्रीभूतमवेक्ष्य तं स्वयतितानाप्त्यानुतप्तोऽभवत् ॥

श्रितबुधनिकरायां शृङ्गपुर्यां वरायां
स्वयमपि स मुनीन्द्रं प्रेक्ष्य सद्योगिसान्द्रम् ।
महिमघनमनूनं मान्यसंन्यासमेनं
गुरुममृतनिदानं प्रार्थयामास नूनम् ॥ ३३ ॥

कलितसकलवृत्तो योगिराड्लोकवित्तः
सविनयपदभाजं प्रेक्ष्य तद्योग्यमेतम् ।

भवदुरितविदारी स त्रिकालज्ञसूरी
उदित विदितपारिव्राज्यसाम्राज्यमग्भैः ॥ ३४ ॥

हृद्यं विद्यासरिदधिगमारण्यमेनं सुशिष्यं
दृष्ट्वौचित्यात्सपदि कुशलो योगनाम्ना चकार ।
विद्यारण्यं तमथ तपसा प्रोज्ज्वलाभ्यामुभाभ्यां
सूर्येन्दुभ्यां सुरगिरिरिवाशेषलोकाश्रितोऽभात् ॥ ३५ ॥

वेदव्यासः सह मुनिवरैः सत्प्रबन्धानिवायं
विद्यारण्यः प्रवचनकृती भूरिभिः सूरिवर्यैः ।
विद्याः सर्वा हृदि विदितवान्वेदभाष्याणि चक्रे
कृत्यं यस्याखिलमपि सदा सर्वलोकोपकृत्यै ॥ ३६ ॥

विज्ञाय यानि सम्यग्विज्ञा विज्ञातसर्ववाक्यार्थाः ।
काव्यानीवाम्नायान्सुव्याख्यातुं च शक्नुवन्तितमाम् ॥ ३७ ॥

अथ वेदभाष्यमखिलं स दर्शयामास सादरं गुरवे ।
दृष्ट्वा सोऽपि च हृष्टश्छात्रं तुष्टाव लोकचित्रमतिम् ॥ ३८ ॥

स्थास्यति श्रुतिवदेतदवन्यामस्य संग्रहपराः सकलाः स्युः ।
सर्वसूरिवरसंमतभावं प्रापयेति स तमप्यनुजज्ञे ॥ ३९ ॥

संनिधिं सुविदुषां समुपेयां तत्र तत्र परिशोधयितॄणाम् ।
सत्वरं समनुशाधि गुरो मामित्युदैरिरदुदारमिमं सः ॥ ४० ॥

यत्नाशरीरवाणीं छात्राकलयसि ततः समायाहि ।
मत्सविधमिति निदेशं प्रददे शान्तो गुरुः स तं गन्तुम् ।

आदायैष निदेशमस्य चरिता देशेष्वथैलेश्वरो-
पाध्यायादिमहाबुधेभ्य उदितां संदर्शयन्स्वां कृतिम् ।
पर्याप्तं न विशोधनं किल बुधैरित्याशु मत्वा ततः
काशीं प्राप्तुमना मुनीश्वरघनां विन्ध्याद्रिमासेदिवान् ॥

प्रातरैक्षत स तत्र कृशाङ्गं ब्रह्मराक्षसमधिष्ठितवृक्षम् ।
पृश्निगोत्रभवभृङ्ग्यभिधानं तृष्णयातितरलं क्षुधया च ॥ ४३ ॥

भीषणं निकटमेत्य पतन्तं सोऽन्वयुङ्क्त करुणाकर एतम् ।
कोऽसि किं तव कुरूपमिदं किं वासमत्र विदधासि वदेति ॥

त्रेतायुगे खलु तुलापुरुषं महात्मा
मह्यं ददौ मुनिपते विबुधाय रामः ।
दैवादकार्षमथ निष्कृतिमस्य नाह-
मीदृक्ततोऽस्मि वितर क्षुधिताय मेऽन्नम् ॥ ४५ ॥

इत्युक्तोऽयं भृङ्गिणा तेन योगी नान्नं दातुं तेऽधिकारो यतेर्मे ।
पृच्छान्यांस्त्वं यामि काशीपुरीमित्युक्तो भूयस्तं बभाषे स भृङ्गी ॥

साधयाम्यभिमतं भवदीयं साधु यामि भवता सह काशीम् ।
बादरायणमहर्षिकटाक्षात्साधयिष्यति भवान्सकलेष्टम् ॥ ४७ ॥

काशिकापतिमवेक्षितुकामः प्रत्यहं श्वपचविग्रहधारी ।
कुक्कुराकृतिधरैः सह वेदैः शीधुभाजनधरः पलपाणिः ॥ ४८ ॥

गुप्तमेवमतिगर्हितवेषो व्यास एति बदरीविपिनात्स्वात् ।
वारितोऽपि मुमुहाय तदङ्घ्री पूरयिष्यति स एव तवेष्टम् ॥

मह्यमन्नमपि संवितरीतुं यत्यतां च भवता यतिवर्य ।
इत्युदीरितवता सह योगी भृङ्गिणा द्रुतमवाप स काशीम् ॥

काशिकां परशिवप्रकाशिकां भासितां बुधवरैरवाप्तवान् ।
इष्टदां सपदि सुष्टु यतीशस्तुष्टुवे परतरां परितोषात् ॥ ५१ ॥

श्रुतयः स्मृतयो महापुराणान्यपि चास्या महिमानमामनन्ति ।
यतिनः कृतिनो मुदा भजन्ति व्रतिनश्च प्रथिताः स्तुवन्त एनाम् ॥

विश्वेश्वरोऽशेषसुरेषु मुख्यो भागीरथी सर्वनदीषु मुख्या ।
क्षेत्रेषु सर्वेषु तथास्ति काशी युक्तं त्रिहैव लयमेकरूपम् ॥

ईट्टे सर्वजनो यां दृष्टादृष्टे फले च या दत्ते ।
सा काशी प्राकाश्यान्नो कस्य स्फुरति लोकस्य ॥ ५४ ॥

अस्ति विस्तृतसमस्तवस्तुमन्निस्तुलापणमहस्ततिस्तुता ।
यागिरागिसुविरागियोगिसङ्गोगिलोकविलसद्गतागता ॥ ५५ ॥

सुप्रचण्डपरवाक्यखण्डनोद्दण्डताण्डवितुण्डपण्डिता ।
सूक्तियुक्तिमतिशक्तिमत्तमैरुत्तमा बहलभुक्तिमुक्तिदा ॥ ५६ ॥

विजयतेऽम्बरचुम्बनसंभ्रमिप्रचुरसुन्दरमन्दिरबन्धुरा ।
प्रचितपातकजातविघातनप्रसितनीतिमनीषिमुनीप्सिता ॥ ५७ ॥

सुरतीरिणी खलु पुरो विहारिणी
सुखकारिणी मुनिमनोनुचारिणी ।
भवदारिणी भवशिरोविसारिणी
भयवारिणी जयति पापहारिणी ॥ ५८ ॥

ध्यानाद्दानात्स्नानाज्जलपानान्निकटस्थानाच्च ।
नानादानाचीर्णात्फलदा मणिकर्णिकाऽत्र मुनिवर्ण्या ॥ ५९ ॥

भक्तमान्यभुवनत्रयेशितुर्युक्तमेव हि तदुत्तमोत्तमम् ।
क्षेत्रमुक्तमविमुक्तनामकं नात्र संशयलवोऽपि विद्यते ॥ ६० ॥

सद्भक्षाशितृभिर्विषाशनमहो लिप्ताङ्गरागद्रवै-
र्भस्मैकानिशधारणं विवसनं कौशेयवासप्रियैः ।
द्वैरूप्यं ध्रुवमाप्यते निजतनौ यस्यां जनैः साप्यसौ
काशी सत्यमपेक्षिता सुविदुषां किं तद्विचित्रं स्तुवे ॥

इति स्तुत्वा काशीमधिनगरि सर्वत्र चरिता
महान्विद्यारण्यो महितजगदाह्लादिमहिमा ।
सतो दृष्ट्वा हृष्टस्त्रिदशतटिनीतीर उषितान्
चिरं व्यासान्वेषी जयति कृतिशोधे धृतमनाः ॥ ६२ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यादिबिरुदावलीविराजित श्रीमन्नृसिंहभारती करकमलसंजातसकलविद्याविशारदपंडितपुण्डरीकमण्डलीमार्तण्ड श्रीसच्चिदानंदभारतीमुनीन्द्रनिर्मापिते विद्वद्बालकलक्ष्मणशास्त्रिविरचिते गुरुवंशे महाकाव्ये चतुर्थः सर्गः ।



## ॥ विशेषसूचना ॥

### ( चतुर्थं सर्गे )

८ तमे श्लोके—

**श्रीज्ञानघनाचार्याः**— इदानीं शृङ्गगिरिक्षेत्रे परिदृश्यमानः प्राचीनतमो जनार्दनालयः एतेषां स्वामिनां काल एव निर्मापित इति ज्ञायते । प्रकाशात्मप्रणीतविवरणानुसारितत्त्वशुद्धिनामको ग्रन्थः एतैर्विरचितः ॥

९ तमे श्लोके —

**ज्ञानोत्तमशिवः**— दक्षिणदेशं समागतः गौडदेशीयोऽयं विद्याश्रीनामकग्रन्थप्रणेता । इष्टसिद्धि-नैष्कर्म्यसिद्ध्योर्व्याख्याता महामहोपाध्यायज्ञानोत्तममिश्रस्तु एतस्मादन्य एव । स च उत्तरकावेरी (कोळ्ळिड) तीरस्थमङ्गलग्रामाभिजनो गृहस्थः । शृङ्गेरीजगद्गुरूणां श्रीज्ञानोत्तमशिवयतिवर्याणां कालात् प्राक् पञ्चाशदुत्तरशत (१५०) संवत्सरानन्तरं समुत्पन्नोऽयम् । विभिन्नकालिकयोर्द्वयोरपि अभेदं ब्रुवन्ति नाममात्रसाम्येन प्राज्ञंमन्यमानाः केचित् । तच्चात्यन्तं बाधितम् ॥

१६ तमे श्लोके —

**श्रीविद्यातीर्थः**—इमे च श्रीमध्वाचार्यैः साकं शास्त्रे विवादमकुर्वन् ।

२१ तमे श्लोके —

**एकशिलानगरं**—इदमेवेदानीं 'वारङ्गल्' इत्युच्यते ।

श्रीविद्यातीर्थमहास्वामिनां सकाशात् तुर्याश्रमं, महावाक्याद्युपदेशं च स्वीकृतवन्तौ श्रीभारतीतीर्थः श्रीविद्यारण्यः इति क्रमेण लब्धसंन्यासदीक्षानामानौ उभावपि संन्यासस्वीकारकाले बालौ ब्रह्मचारिणौ च न गृहस्थौ इत्येतन्मनसि सम्यगवधेयम् ।

# NOTES

V 8. Śri Jñānaghana: The Janardana temple in Sringeri had its origin during the reign of this Āchārya.

He wrote the *Tattvaśuddhi* which supports Prakāśātman's *Vivaraṇa*.

V 9. Sri Jñānottama Śiva: A Gauḍa settled in the south. Author of *Vidyāśrī*: Different from Mahāmahōpādhyāya Jñānottama Miśra, who wrote commentaries on *Naishkarmyasiddhi* and *Ishṭasiddhi* and was a native of Mangalam on the Coleroon. This grihasta Jñānottama was separated from Jagadguru Jñānottama by about a century and a half.

V 16. Śri Vidyā Tirtha engaged Sri Madhva in debate.

V 21. Ēkaśilānagara is modern Warangal.

Note that the two Brahmin youths from Warangal were Brahmacharis when they received *sanyasa* from Śri Vidyatirthā under the dīksha names of Bharathitirtha and Vidyāraṇya.

---

# पञ्चमः सर्गः ॥

श्रीकरं सकललोकनुतं तं प्रागुदीरितसुगोपितवेषम् ।
बादरायणमवैक्षत विद्यारण्ययोगितिलको मुनिराजम् ॥ १ ॥

निर्गतं स बदरीवनमार्गाद्विश्वनाथनिलयं प्रति यान्तम् ।
सारमेयतनुवेदपरीतं पारमार्थिकमनाः प्रणनाम ॥ २ ॥

वारितोऽपि च निजाकृतिगोप्त्रा मस्करिन्स्पृश न मामिति वक्त्रा ।
सैष एव मुनिराडिति वेत्ता न व्यमुञ्चत पदे स तदीये ॥ ३ ॥

बादरायणमवैमि महान्तं सादरं शरणमेमि भवन्तम् ।
सुप्रसीद कृपयेति वदन्तं सप्रसादमगदीद्यतिनं तम् ॥ ४ ॥

ज्ञातवानसि यते मम रूपं केन बोधित ऋतं कथयेति ।
पृष्ट एवमवदच्च स विद्वच्छृङ्गिणाखिलमश्रुतिस पथीति ॥ ५ ॥

उक्तवन्तमथ तं सह तेन द्रागुपेहि बदरीविपिनं स्वम् ।
तत्र सर्वमितरत्त्वभिदध्यामित्युदीर्य मुनिरन्तरधत्त ॥ ६ ॥

वृत्तमेतदवगत्य स शृङ्गी तोषमापदथ तौ सुमनस्कौ ।
ब्रह्मनिष्ठमुनिबृन्दनिषेव्यं तद्वनं समधिजग्मतुराशु ॥ ७ ॥

संददर्श मुनिराडथ वेदव्यासमादृतमशेषजगत्सु ।
विद्युदावृतमिवासितमेघं सज्जटालसितनीलतनुं तम् ॥ ८ ॥

पैलमुख्यमुनिभिः परिवीतं योगपट्टमवलम्ब्य निषण्णम् ।
गोपनेप्सुविधिबद्धसुविद्यास्तोमवत्कलयतां प्रविभान्तम् ॥ ९ ॥

दक्षहस्तविलसन्मतिमुद्रं कुम्भभूरिव तुरङ्गमवक्त्रम् ।
सर्वशास्त्रकृतिकृत्कृतिवर्यस्तं नुनाव परमोन्नतवृत्तम् ॥ १० ॥

ब्रह्मणाधिगमितः श्रुतिराशिः संव्यभाजि भवता शुकतात ।
ब्रह्मसूत्रनिकरात्मकशास्त्रं निर्मितं सदपवर्गनिदानम् ॥ ११ ॥

योगसूत्रचयभाष्यमभीष्टं योगिनामपि पुराणकवीन्द्र ।
देव कीर्तयितुमर्हति को वा तावकानगणितान्सुगुणौघान् ॥ १२ ॥

भूरिजन्मसु कृतैः सुकृतैर्मे दृष्टिगोचर उदेषि नमस्ते ।
किं बहूक्तिभिरवातर एवं विष्णुरेव सदनुग्रहणाय ॥ १३ ॥

इत्यथ स्तुतिपरं यतिचन्द्रं प्रत्युवाच करुणाब्धिमुनीन्द्रः ।
कस्त्वमत्र कुत आगत एवं किं मया तव फलं करणीयम् ॥ १४ ॥

पृष्ट एवमृषिणा महताऽयं दृष्टलोकचरितेन च योगात् ।
सुष्ठु वत्सलतया यतिवर्यस्तुष्ट आख्यदखिलं निजवृत्तम् ॥ १५ ॥

श्रेष्ठभाजि पुर एकशिलाख्ये शिष्टवैदिकतमो जनको मे ।
कष्टदायिभवचालनभारक्लिष्टहृद्बहुवयाः समवात्सीत् ॥ १६ ॥

वर्धितौ सह तदीयतनूजावध्यगीष्वहि युतौ बहुविद्याः ।
प्रार्थितां सुयतितामथ विद्यातीर्थसंनिधिग आप कनीयान् ॥ १७ ॥

सोदरस्य विरहादतिखिन्नो रोधनेऽप्यधनयोर्जनयित्रोः ।
साधनीयविभवो न्यदधां वाग्वादिनीमनुपुरश्चरणानि ॥ १८ ॥

शक्तिसंयुतगणेशपदाब्जे भक्तिमानजपमस्य मनूंश्च ।
सेवितापि तपसा चिरकालं देवता न फलदाविरभूत्सा ॥ १९ ॥

वाञ्छितार्थविरहादचिकीर्षं किंचिदेव खलु दुष्करकार्यम् ।
अञ्जसा पुरत एत्य तु काचिन्मञ्जुवाचमवदन्महिला माम् ॥

वत्स मा वितनु साहसमेतत्प्रोत्सहे तव वरं वितरीतुम् ।
पश्य पातकगिरीन्प्रविनष्टान् नश्यतोऽपि च पुरश्चरणैस्ते ॥ २१ ॥

द्रागितः परमपि प्रविधेहि प्रागिवाधिकृतपो हितसिद्ध्यै ।
सेत्युदीर्य गिरमाशु तिरोधादत्यजं तदपि दुष्करकार्यम् ॥ २२ ॥

आस्थितोऽपि भजने जनयित्रोः सोदरस्य विरहं तमसोढा ।
मार्गणाय कलयन् तदनुज्ञां निर्गतोऽस्मि मुनिराज पुरात्स्वात् ॥

तत्र तत्र विचरन्नपि विद्यातीर्थमौनिनिकटे तमपश्यम् ।
तत्र वीक्ष्य यतिभावमुपेतं सद्विरक्तिरहमप्ययमापम् ॥ २४ ॥

वेदभाष्यकृतिशोधचिकीर्षा बोधितस्य मम शृङ्गिवचोभिः ।
त्वामदर्शयत कामदुहं द्राक् प्रेमवाननुगृहाण महात्मन् ॥ २५ ॥

याचितोऽथ यतिनेति स पर्यालोचयद् हृदि महाशयवर्यः ।
याचते किमयमीप्सितमल्पं रोचते न मम दातुरनल्पम् ॥ २६ ॥

योग्य एष उपदेष्टुमशेषं भाग्यतो मम च दर्शनमासीत् ।
सत्वरं भवति येन तु सर्वज्ञत्वमप्ययमिदधे तमुपायम् ॥ २७ ॥

एवमात्मनि विभाव्य महाश्रीदेवताभजनरीतिमृषीन्द्रः ।
तत्स्वरूपमखिलं समभाणीदुत्सुको निखिलतन्त्ररहस्यम् ॥ २८ ॥

एतयैव परदेवतयैते प्रीतयादुरपि पृश्निमुनीन्द्राः ।
सिंहपीठमुपकल्प्य च विद्वत्सिंह देवपतये यतिवर्य ॥ २९ ॥

त्वं च तद्रचयिता बहुलान्नं वाञ्छितं वितर शृङ्गिण एवम् ।
सर्वमप्यस्य सुसिद्ध्यति कार्यं सर्वथापि तव यद्यदभीष्टम् ॥ ३० ॥

धन्यमित्थमभिधाय यतीन्द्रं संनुतोऽन्तरधात्स मुनीन्द्रः ।
शृङ्गिणा समभिमन्त्र्य मतङ्गं संगतः शिखरिणं स उपागात् ॥

चारु तुङ्गपदसंगतभद्रातीरभासितनिवासमुदारम् ।
भास्वरं नतशरण्यविरूपाक्षेश्वरं यतिवरो विलुलोके ॥ ३२ ॥

राजतादुषितगुह्यकशैलात्स्थाजिताचलगुणादसुरेण ।
हेमकूटमधिकं गिरिराजं प्रेमकूटमनसाऽधिवसन्तम् ॥ ३२ ॥

काशिकायितमतीव गुणौघैर्भासितं द्विजवरैरपि तीर्थैः ।
सत्रकृन्मुनिजनाश्रितपम्पाक्षेत्रराजमधिगत्य विभान्तम् ॥ ३४ ॥

लोकचित्रमहिमानमवेक्ष्यास्तोकभक्तिविकसद्धृदयाब्जः ।
संप्रणम्य परिपूज्य विरूपाक्षं प्रभुं यतिरतीव नुनाव ॥ ३५ ॥

सोमभूषण विभो करुणाब्धे कामितार्थद पदस्मृतिभाजाम् ।
व्योमकेश मुनिवृन्दनुत श्रीहेमकूटगिरिनाथ नमस्ते ॥ ३६ ॥

किंनरादिवरदानकृते त्वं मान्यसेऽत्र परितो बहुरूपः ।
धन्यतामुपगतोऽस्मि भवन्तं यन्नमामि महयाम्यपि नौमि ॥ ३७ ॥

इत्युरुस्तुतिपरं यतिवर्यं नित्यमीशमविहातुमनस्कम् ।
क्षुत्तृषोरसहनेन मनीषी सत्वरं समवदत्किल शृङ्गी ॥ ३८ ॥

क्षेत्रषोडशकमध्यमतङ्गक्ष्माधरे विजयपूर्विततासीत् ।
योजनद्वयमिता मुनिमौले भाजनं नरपतिप्रियलक्ष्म्याः ॥ ३९ ॥

कालदोषवशतः क्षयमाप्ता शीलिताखिलसुतन्त्रवलात्ताम् ।
लीलया समवकल्प्य पुरं मां पालयानन्द नितान्तमिहैव ॥ ४० ॥

एवमेतदुदितं स निशम्य ग्रावराजमगमत्स मतङ्गम् ।
सादरः सविधमस्य तदागान्माधवेन सह सायणमन्त्री ॥ ४१ ॥

तं तदा सविनयं स ययाचे संततिं सुचरितैः परितोष्य ।
सन्ततं सकलवेद्यगदीत्यौ संततिर्न युवयोर्भवितेति ॥ ४२ ॥

तन्निशम्य वचनं बहुचिन्तापन्नखिन्नमनसावगृणीताम् ।
वित्तमस्ति बहुलं तदमुष्मात्पुत्रिणां गतिमवापय वेति ॥ ४३ ॥

माधवीयमिति सायणीयमित्यादराद्यतिवरोऽर्थित आभ्याम् ।
वेदशास्त्रगकृतीः सकलास्ताः साधु संव्यधित तद्द्वयनाम्ना ॥ ४४ ॥

कारिता अपि च संततिभेदाः पूरिता अपि तयोरभिलाषाः ।
चारुणा चिरमनुग्रहणेनोद्धारयन्ति विनतान्हि महान्तः ॥ ४५ ॥

मङ्गलैकनिलये यदुवंशे संगमाभिधमहीपतिरासीत् ।
संगता हि सुगुणा अमुमेवोत्तुङ्गमित्युदितसार्थकनामा ॥ ४६ ॥

पञ्च ते हरिहरक्षितिपालः किंच कम्पनृपबुक्कमहीशौ ।
मारपक्षितिपमुद्दपराजौ सूरयोऽस्य तनयाश्चिरमासन् ॥ ४७ ॥

पण्डितो हरिहरेश्वर उर्व्या मण्डनं च किल बुक्कमहीन्द्रः ।
पाण्डवेष्विव युधिष्ठिरपार्थौ चण्डविक्रमयुतावचकास्ताम् ॥ ४८ ॥

तत्र तत्र धरणौ सकलास्ते धात्र्यधीशपदभाज उदाराः ।
न्यायमार्गमविमुच्य पुरोक्तैः मायणादिसचिवैः सह रेजुः ॥ ४९ ॥

एकमेकमथ सेवनमेतानाकलय्य विबुधानवति स्म ।
वीररुद्रनृपती रणभूमीपारगामितधनुर्धरनाथः ॥ ५० ॥

आदिशंभुमिव कारणदेवा आदितेयपमिवाग्निपुरोगाः ।
मुञ्जराजमिव वत्सनृपाद्याः मञ्जु भेजुरधिकारिण एनम् ॥ ५१ ॥

विक्रमी हरिहरक्षितिपालो बुक्कभूभृदपि चाल्पवयस्कौ तौ ।
मुख्यकोशभवने विनियुक्तौ चक्रिणा चतुरुपायपरेण ॥ ५२ ॥

तेन दैववशतः सुरपूर्वत्राणतः परिभवः किल लेभे ।
स्वामिनं तु पुर एकशिलाया रामनाथमनुभेजतुरेतौ ॥ ५३ ॥

शौर्यवान्पुनरुपेत्य समित्यां पर्यवीभवदमुं स तदैतौ ।
तद्भटैरतिबलैः प्रगृहीतौ उद्भटावपि च दैवबलेन ॥ ५४ ॥

प्रापितौ सपदि तैः सुरपूर्वत्राणवाजिपतिसौधकपाटम् ।
स्थापितौ घनघने न निशीथे क्वापि तौ वरगुणौ निरगाताम् ॥

प्रातरैक्षत महान् स गृहीतौ भ्रातरौ निजभटैः पुर एतौ ।
नेतरत्र बत धावितवन्तौ कातरावपि निशीति विमर्शी ॥ ५६ ॥

उत्तमत्वमनयोर्हृदयालुः सत्यसन्धगुणयोः स दयालुः ।
वित्तवान् सह बलेन तदाभ्यां दत्तवान् विततदक्षिणदेशम् ॥ ५७ ॥

तन्निदेशमधिगम्य सगर्भ्यावन्वितौ बहुबलेन सहर्षौ ।
चारुतेज उदितादथ कृष्णां तेरतुस्त्वचिरगावुडुपेन ॥ ५८ ॥

बल्लालक्षितिपालकेन विजितौ युद्धेन मध्ये महा-
वल्लीभृद्द्विपिनस्य चक्रतुरिमौ श्रान्त्योपवेशं चिरम् ।

निद्राणः सहजाङ्कगो हरिहरक्षोणीभृदेष क्षणं
भद्रं रेवणसिद्धयोग्यधिगमस्वप्नं तदाप्नोत्तराम् ॥५९॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यादिबिरुदावलीविराजित श्रीमन्नृसिंहभारती करकमलसंजातसकलविद्याविशारदपंडितपुण्डरीकमण्डलीमार्तण्ड श्रीसच्चिदानन्दभारतीमुनीन्द्रनिर्मापिते विद्वद्बालकलक्ष्मणशास्त्रिविरचिते गुरुवंशे महाकाव्ये पञ्चमः सर्गः ।

---

## ॥ विशेषसूचना ॥

(पञ्चमे सर्गे)

१० तमे श्लोके—

श्रीहयग्रीवसकाशात् अगस्त्यमुनिवर्यो यथा श्रीविद्यारहस्यानि व्यजानात् एवमेव बादरायणसकाशात् विद्यारण्ययतिवर्योऽपि देवीमन्त्रादि-तत्वानि विजानाति स (श्लो. २८)

श्लो० ४१, ४२—

सायणमाधवनामानौ उभौ अमात्यौ स्वसन्तानलाभाय विद्यारण्यं प्रार्थयतां इति प्रतिपादितम् । एतेन विद्यारण्यो न माधवः, किंतु माधवादन्य एवेति स्पष्टं ज्ञायते ॥

श्लो० ४४-४५—

विद्यारण्यः स्वप्रणीतान् वेदभाष्य-धातुवृत्ति-न्यायमालादिमान् ग्रन्थान् ताभ्यां सायणमाधवाभ्यां सन्तानत्वेन ददौ । सप्तविधसन्तानान्यतमकृतिरूप-

सन्तानलाभेन संपूर्णमनोरथौ तौ तान् ग्रन्थान् प्रचारयामासुः। ततश्च ते ग्रन्थाः सायणीयं, माधवीयं इति सर्वत्र प्रथामापुः॥

श्लो० ५०-५२ —

वीररुद्रनृपतिः-अयं काकतीयमहाराजः प्रतापरुद्रदेवः II. हरिहरः, बुक्कश्च प्रथमतः एतन्महाराजनियोगानुसारिणः राज्यपरिपालनकर्मणि साह्यमकरन्न्। १३२३ तमे क्रैस्तवाब्दे मोहम्मदीयैः युद्धे प्रतापरुद्रः पराजितोऽभूत्॥

श्लो० ५३–५४ —

अत्र वर्णितः रामनाथः चरित्रप्रसिद्धः कम्पिलिरामनाथ एव भवेत्। १३२३ तमे संवत्सरे कम्पिलिनगराक्रमणकाले एतौ हरिहरबुक्कावपि गृहीत्वा तुरुष्काः दिल्लीश्वरसकाशमनयन्॥

५९ तमे श्लोके—

भोसल (होय्सल) III वल्लालेन साकं संप्रवृत्ते प्रथमयुद्धे बुक्कहरिहरौ पराजयं प्रापतुः॥

रेणुकाचार्यापरनामकः रेवणसिद्धः वीरशैवानामाचार्येषु पञ्चसु अन्यतमः। अयं च बसव (११२५—११६५) कालिकः तत्समीपकालिको वा भवेत्॥

## NOTES

**V 10.** Agastya resorted to Hayagrīva to learn the mysteries of Śrī Vidyā. Here Vidyāraṇya was taught the mysteries of Dēvī Mantra (See. V 28) by Bādarāyaṇa.

**V 41, 42.** Note that Sāyaṇa and Mādhava approached Vidyāraṇya to be blessed with progeny. It should be obvious that Vidyāraṇya was *not* Mādhava.

**V V 44–45.** *Vedabhāshya* and other works, such as *Dhātuvritti* and *Nyāyamāla*, originally composed by Vidyāraṇya were permitted to be known as *Sāyaṇīyam* and *Mādhavīyam* (as those written by Sāyaṇa and Mādhava). To an author a literary work is as good as a son. Mādhava and Sāyaṇa who were not destined to have sons had to be satisfied with the filial felicity of calling some great works their Children.

**V 50–53.** Vīra Rudra was Kākatīya Pratāpa Rudra II under whom Harihara and Bukka served. He fell in battle in 1323.

**V V 53, 54.** Ramanatha mentioned here must be Ramanatha of Kampili. After the fall of Kampili (1327) Harihara and Bukka were taken prisoners by the Muslim army.

**V 59.** In his first encounter with Hoysala Ballala III, Harihara was defeated.

Rēvaṇa Siddha or Rēnukāchārya was one of the five *āchāryas* of Vīra Śaivas. He was either a contemporary of Basava (1125–65) or lived a little before or after him.

# षष्ठः सर्गः ॥

स्वस्तिश्रीमन्नृप तव भवेद्वीर सिंहासनश्रीः
विद्यारण्यप्रचुरकृपया सर्वसंरक्षणाय ।
विश्वोत्तुङ्गं विबुध कलयेश्चन्द्रमौलीशलिङ्गं
भाविक्ष्मेशास्त्रिगुणगणितैकादशाथ त्वदाद्याः ॥ १ ॥

अग्रे भावी त्रिभुवननुतो वीरपूर्वो वसन्तः
सर्वामुर्वीं सुचिरमविता धार्मिकः सर्वथेति ।
उक्त्वा स्वप्ने हरिहरनृपं रेवणासिद्धयोगी-
ऽन्तर्धानं समभजदथ प्राबुधत्सोऽपि भूपः ॥ २ ॥

प्रातेऽवादीद्धरिहरनृपः स्वप्नवृत्तं समस्तं
हर्षोत्कर्षं सह सहभुवा सोऽपि संप्राप शूरः ।
भग्नं सैन्यं तदपि नृपतेः सर्वमागात्समीपे
विद्यारण्याह्वयमुनिपमानन्ददं संददर्श ॥ ३ ॥

नत्वा स्तुत्वा यतिवरममुं सर्वथाशीर्वचोभिः
साकं लब्ध्वा तदनुमतिमप्याशु बल्लालभूपम् ।
जित्वाक्रम्याखिलजनपदं पालयामासतुस्तौ
वल्मीकस्थं शुभमगमतां स्वर्णसिंहासनं च ॥ ४ ॥

शिष्टैर्जुष्टा प्रवहति सरिन्मङ्गला तुङ्गभद्रा
यत्रैतस्मिन् जगति नगरे हस्तिकोणाभिधाने ।
सन्तौ कान्तौ सदसि मृगयां संविधित्सू कदाचि-
न्मान्यौ सैन्यैर्वनमगमतां श्वापदाक्रान्तमेतौ ॥ ५ ॥

मुक्ताः श्वानः सपदि मृगयाजीविभिस्तद्भटौघै-
धर्तुं धावच्छशमपि स तान्धावयामास तूर्णम् ।
चित्रं दृष्ट्वा तदिह विपिने विस्मितास्ते नितान्तं
वृत्तान्तं तं नृपतिवरयोः सर्वमेवोक्तवन्तः ॥ ६ ॥

आकर्ण्यैतौ सकलमपि तं प्रोचतुः पार्थिवेन्द्रौ
विद्यारण्यं प्रथितयमिनं सोऽपि ताभ्यां सहैत्य ।
स्थानं दृष्ट्वा बलवदिति तद्राजधानीं विधातुं
चित्ते चक्रे नृपकुलसुवां भाविनां भूपतीनाम् ॥ ७ ॥

नागेष्वर्कैर्मित इह शके शालिवाहस्य याते
धातर्यब्दे शुभसमुचिते मासि वैशाखनाम्नि ।
शुक्ले पक्षे सुगुणपितृभे सूर्यवारे सुलग्ने
सप्तम्यां श्रीविजयनगरीं निर्ममे निर्ममेन्द्रः ॥ ८ ॥

द्वारैः स्फारैर्नवभिरुदिता भूर्युपद्वारयुक्ता
विस्तारायत्युभयविधया योजनद्वन्द्वमाना ।
उर्व्यां सर्वाः प्रथितनगरीर्यज्जयत्येव तस्मात्
ख्याता नाम्ना विजयनगरी चक्रराजाकृतीड्या ॥ ९ ॥

चारुद्वारां कनकमुकुटौघाग्रनिर्भेदितस्व-
र्गङ्गाभङ्गैः परित इह पुर्यन्तराक्रान्तलीलैः ।
यस्यां पौराभिलषिततलासङ्गभृत्तुङ्गभद्रा-
कुल्यावत्यां समभजदिवान्वर्थतां गोपुराख्या ॥ १० ॥

यस्यां सन्तो वरपुरि चतुर्वेदितां संभजन्ते
यान्त्येवं तां विसरदजिराः सर्वशाला विशालाः ।

वीथ्यः पृथ्व्यः प्रमिलितचतुर्वेदशाखोपशाखा-
साम्यं रम्यं दधति विशतां दुर्गमा निर्गमाय ॥ ११ ॥

हस्तादानक्षममथ नरैः पादचारैः समन्ता-
दश्वारोहैरपि करिवरारोहिभिर्वस्तुजातम् ।
संविभ्रत्यो विलसदुपकार्यालिहृद्या निषद्या
देवानुर्व्यागमन इव निःश्रेणयः प्रीणयन्ति ॥ १२ ॥

रूपं प्रापद्बहुतरमिह श्रीविरूपाक्षदेवो
यस्मादस्यां स्वयमपि चिरं राजराजो विरेजे ।
पण्येशानाममितधनिनामभ्युपेत्याकृतीस्ता
युक्तं व्यक्तं भवति महतां मित्रकार्यानुरूप्यम् ॥ १३ ॥

यस्यां हर्म्योपरि कुवलयाक्ष्यो नितान्तं रतान्ते
व्यत्यस्तालंकृतिरुचि मुखं वीक्षितुं चन्द्रबिम्बम् ।
आदित्सन्ते सुमुकुरधिया छिन्नहारालिमुक्ता-
बुद्ध्या ताराः परित उदिताः संविधित्सन्ति राशिम् ॥

यस्यां हर्म्योपरि मृगदृशां वक्त्रशोभाजितेन्दुः
क्रीडान्तेऽभूच्छ्रमहृतिकृते साधु शुश्रूषुरेत्य ।
व्रीडाकालानुचितपुरुषायानविच्चत्प्रहार-
स्फूर्जद्वेणिस्फुटमृगमदश्रीयुतो लाञ्छितोऽभूत् ॥ १५ ॥

इज्याशीलैर्विलसति पुरे यत्र यागानलोत्थं
धूमं दृष्ट्वा घन इति मुखं चातकः स्वं विकास्य ।
प्रासादाग्रध्वजपुटसमाघातनिर्भेदितस्व-
र्गङ्गाभङ्गैर्निपतितपयोबिन्दुरानन्दमेति ॥ १६ ॥

यस्याः पुर्या उदितमुदरे चित्रकचित्ररूपं
नूत्नै रत्नैर्विलसतितरां सौधमब्जासनेन ।
भूम्यां रम्यं निरुपमगुणं स्थानमेतावदेवे-
त्यर्थं नॄणामवगमयितुं सालसंवेष्टितं किम् ॥ १७ ॥

विद्यारण्याभिधयतिपतेश्चारुकीर्तिप्रचारात्
श्रावं श्रावं नगरसुषुमां तोषतः शेष उर्वीम् ।
भित्त्वोत्थाय स्वनिखिलफणा विस्तृणन्पश्यतीवे-
त्याभात्युद्यद्वरणपरितोमञ्जरीप्रेक्षकाणाम् ॥ १८ ॥

वामे हस्ते हृषितशयितक्षोणिवध्वाप्तवत्या
शेषाद्भूषां तदनु विबुधेशाच्च तल्लिप्सयेव ।
दक्षं बाहुं नृपगृहमयं सामि विस्तारयन्त्या
यत्नाप्तोऽभूद्वरणमिषतः पारिहार्यो नगर्याम् ॥ १९ ॥

निर्मायैनां नरपतिमहाराज्यसिंहासनेऽस्मिन्
सद्भक्तश्रीहरिहरविभोस्तस्य पट्टाभिषेकम् ।
कर्तुं मैत्रावरुणिमुनिपो रामचन्द्रस्य यद्व-
त्संभारार्थं सकलसचिवान्योगिराजो न्यदिक्षत् ॥ २० ॥

आभूष्यन्तां सपदि सकला वीथयः श्रीनगर्यां
पौरागाराण्यपि च रुचिरैस्तोरणैः सद्वितानैः ।
संसिच्यन्तां सुरभिसलिलै राजमार्गाः समन्ता-
दाबध्यन्तां सुरगिरिसमुत्तुङ्गचारुध्वजाद्याः ॥ २१ ॥

आकार्यन्तां धरणिपतयस्तत्तदर्हैरमात्यै-
रायाप्यन्तामपि विधिविदः कोविदाः क्षोणिदेवाः ।

संनह्यन्तां पुरि करिवराः किंच रङ्गत्तुरङ्गा
भो भो छात्राः प्रभवतु शुभं गीतनृत्यादि सर्वम् ॥ २२॥

संपूर्यन्तां जलधिसलिलैः शातकुम्भीयकुम्भाः
संपाद्यन्तां मिलदवयवव्याघ्रचर्मादयश्च ।
आधूप्यन्तां नरपतिसभान्यप्यगर्वादिधूपै-
रादीप्यन्तां नवमणिमयैर्वेदिका भूरिदीपैः ॥ २३ ॥

आधाप्यैवं स सचिवगणात्सर्वमानाय्य चेष्टं
शान्त्याद्यं तद्विहितमखिलं कारयित्वा द्विजेन्द्रैः ।
राजानं तं प्रथमदिवसे सन्महिष्या समेतं
श्रीपम्पेशं हृदि दधतमाधापयच्चोपवासम् ॥ २४ ॥

तस्मै श्रीमद्धरिहरमहाराजनाम्ने हितं त-
च्छात्रायात प्रचुरयशसे श्रेयसे भूयसे च ।
विद्यारण्याह्वयगुरुवरश्चारुपट्टाभिषेकं
चक्रे शक्रोपमगुणभृते निर्जराचार्यकल्पः ॥ २५ ॥

स्वस्तिश्रीमन्नरवरपतेरस्य सेवां वितेनु-
र्मान्या अन्ये धरणिपतयो धन्यतां मन्यमानाः ।
पुण्यैराप्यं सविधमुचितं प्राप्य देदीप्यमाना
नामं नामं वसुरथ यथा देवराजस्य देवाः ॥ २६ ॥

हर्षोत्कर्षाद्धरिहरमहाराजराजस्य शीर्षे
तस्मिन्काले व्यरचि विबुधैः पुष्पवृष्टिर्यथेष्टम् ।
स्वीयो राजा भजति समुपेत्यातपत्रात्मनेति
भ्रासास्तारा उपनृपमिवैतानि पुष्पाणि रेजुः ॥ २७ ॥

श्रीमद्भूमीश्वरकुलपतेर्भाति रत्नाभिषेके
नानारत्नान्यसमसदसि व्याप्नुवन्त्युज्ज्वलानि ।
तत्तत्कालोचितनवरसा नूनमन्तः प्रपूर्णा
नानावर्णा बहिरपि बभुर्निःसृता विष्वगस्य ॥ २८ ॥

विद्यारण्यप्रणयरसतो वर्धमानस्य नित्यं
सद्धर्मद्रोः सति नरपतेः स्वर्णपूर्णाभिषेके ।
भद्रा मुद्राः कनकरुचिरा भेजिरेऽस्यालवालं
भूत्यै सेवामिव विदधतो भूपतीनां प्रतापाः ॥ २९ ॥

अप्राप्यैकं परमपुरुषं सद्गुणानां निधानं
पुण्यात्मानं भुवि बहुनृपानंशतो याश्रितासीत् ।
सैषा जोषादभजत तदा सन्महाराज्यलक्ष्मीः
स्वस्तिश्रीमद्धरिहरमहाराजराजाधिराजम् ॥ ३० ॥

हर्षोत्कर्षाद्भुवनगुरुराडन्वजानाद्वरेण्यो
विद्यारण्यो निखिलबिरुदान्यस्य धर्तुं धरेन्द्रान् ।
आयातास्ते धरणिपतयो धारयामासुरस्मै
स्थाने स्थाने सपदि मुदिताः सार्वभौमाय सर्वे ॥ ३१ ॥

काले तस्मिन्नभिमतमहाकार्यसिद्धेर्वदान्यो
विद्यारण्यो मुनिपतिरमुं संभ्रमात्संबभाषे ।
संतोषाब्धौ सदसि नृपते सन्मुहूर्तेऽद्य वर्ते
संप्रेक्ष्य त्वां नरपतिमहाराज्यसिंहासनस्थम् ॥ ३२ ॥

श्रेयो भूयो भवतु भवतः श्रीविरूपाक्षदेव-
प्रेम्णा लक्ष्मीं कलय ददतस्तस्य मुद्रां सुभद्राम् ।

भूयाद्भूयस्यनुपममहीमण्डलाखण्डलश्रीः
विद्यातीर्थाभिधमुनिकृपावर्धिकार्योद्यतस्य ॥ ३३ ॥

आचक्षाणं तमिति समितौ प्रत्युवाचाथ वाग्मी
स्वामिन् श्रीमच्चरणकमलायत्तमेतत्समस्तम् ।
छात्रोऽहं ते गुरुवर कृपापाङ्गपातस्य पात्रं
कार्येष्वार्यस्मृतिनिभगिरा साधु मां बोधयेति ॥ ३४ ॥

एवं भूमीरमणवचसा प्रार्थितः सन्यतीन्द्रः
प्रोचे राजन्प्रवितर धनान्यागतेभ्यो द्विजेभ्यः ।
भूदानादि प्रवितनु महादानमप्यग्रहारान्
कुर्याः प्राज्ञान् भर जननुतो राजनीत्या जयेति ॥ ३५ ॥

दानान्यादात्तदनु स तदा हर्षदः पारिषद्य-
क्ष्मादेवेभ्यः क्षितिपमकुटीरत्ननीराजिताङ्घ्रिः ।
सर्वैर्भूपैः प्रविलसदहंपूर्विकैरर्पणीयान्
हस्त्यश्वाद्यान् बहुविधकरान् दर्शनेनानुमेने ॥ ३६ ॥

पूर्णोत्साहो नरपतिरयं मन्दिरादिन्दिराढ्यो
वाद्योद्घोषैर्विविधबिरुदैर्वन्दिवृन्दैरमन्दैः ।
हस्त्यश्वाद्यैर्बहुविधबलैश्चाधिरुह्येभराजं
वीथीमागाद्विजयनगरे नाकपुर्यामिवेन्द्रः ॥ ३७ ॥

तस्मिन्काले हरिहरमहाराजमुद्भ्राजमानं
राजीवाक्ष्यो नयननलिनैश्चारु नीराजयन्त्यः ।
पौनःपुन्याल्ललितमिव नीराजयामासुरेनं
प्रासादाग्रे करकलितया रत्ननीराजनाख्या ॥ ३८ ॥

हर्म्योपाग्रे कृतवसतिभिर्लालसानिर्निमेषं
पश्यन्तीभिर्द्विजयुवतिभिर्मङ्गलाचारलाजाः ।
कीर्णाः पूर्णाभ्युदयविलसत्सार्वभौमस्य शीर्षे
हृष्ट्या वृष्टाः सुमनस इव स्वर्वधूभिर्विरेजुः ॥ ३९ ॥

पूर्णैश्वर्योदयजनघने लब्धवर्णप्रवर्ण्ये
सर्वोर्वीन्द्रैर्विजयनगरे सर्वतः संविहृत्य ।
स्तुत्यः पौरैर्नरपतिरयं धर्मसूनूपमानः
सौधं प्रागात्सुविनयपरैः सोदरैर्मोदमानः ॥ ४० ॥

आस्थानस्थो नरपतिरसौ कारयन्मन्त्रिधुर्या-
दायातानां सकलधरणीपालकानां यथार्हम् ।
संमानान्द्राक् समुचितविदाकर्ण्य विज्ञापनानि
प्रीत्या सान्त्वैर्निजनिजपुरीर्यातुमेनान् न्यदिक्षत् ॥ ४१ ॥

सम्राण्णम्रो हरिहरमहाराजराजो गुरुश्री-
विद्यारण्यं नृपगणनुतोऽनल्पसंकल्पसिद्धम् ।
ध्यायं ध्यायं परशिवधियाऽऽनम्य साष्टाङ्गरम्यं
विज्ञाप्य स्वं विरुदमखिलं प्रार्पयामास तस्मै ॥ ४२ ॥

यत्नं चक्रे स निखिलतपस्सिद्धिमान् स्वर्णवृष्ट्यै
नित्यैश्वर्या विजयनगरे सन्तु लोका इहेति ।
आसीत्पूर्णा दिशि दिशि ततस्तत्र कल्याणवृष्टिः
कल्याणाख्यामभृत च पुरी भूरिकल्याणभोगा ॥ ४३ ॥

अस्मद्राजं न्यधित महितश्रीविरूपाक्षमितं
विद्यारण्यो मुनिपतिरयं सिद्धिमान्भूय एनम् ।

श्रीदं कर्तुं धनपतिगृहादाचकर्षन्निधिं कि-
न्त्वित्याख्यान्तो वसु जगृहिरे राजशिष्टया जनौघाः ॥

सौवासिन्यं हरिहरमहाराजराजेन लब्धं
मान्यं लोकैरिति निजतनौ भद्रहारिद्रलेपम् ।
कुर्वाणेयं विजयनगरी पीतवर्णा विभाती-
त्युक्तं युक्तं कृतिभिरवनौ किं न साध्यं महद्भिः ॥

वासस्थाने तदनु घटयाचास पूर्यां सपर्यां
काले काले समभिलषितां शृङ्गिणे संप्रहृष्टः ।
विद्यारण्यो धरणिपतये बोधयित्वा भविष्य-
त्कार्यं सर्वं निरगमदथो तीर्थयात्रां विधातुम् ॥ ४६ ॥

मार्गे गच्छन्स विजयपुरे प्रेक्षिता लोकमारीं
मारीं तस्या द्रुतमरचयत्सर्वदिग्बन्धमस्त्रैः ।
स्रोतोभेदैर्दशशतविधैः सागरं संमिलन्त्याः
भागीरथ्या मुनिशतविधान्याशु तान्यत्ययासीत् ॥ ४७ ॥

मा गच्छार्य त्वमथ सहसेत्यद्भुतामभ्रवाणीं
अग्रे श्रुत्वा गुरुनिगदितं संनिवृत्तस्ततो वै ।
कंचित्कालं कृतबहुतपाः प्रेक्ष्य केदारनाथं
गङ्गातीरे मुनिजनघने काशिकायामवात्सीत् ॥ ४८ ॥

मूकं दिल्लीश्वरतनुभुवं तेन संप्रार्थ्यमानः
कृत्वा वाग्मिप्रवरमथ तं प्राप्य भूमिं च तस्मात् ।
प्राक्क्लृप्तानां त्रिदशतटिनीतीरगानां मठाना-
मासन्नं श्रीमठयुगलमाधाप्य तत्रैव तस्थौ ॥ ४९ ॥

स्मृत्वा वाणीं गुरुनिगदितां सत्वरं शृङ्गपुर्यां
मारप्पाख्यं प्रणयिसहजं प्रेष्य जामातृयुक्तम् ।
वृत्तिक्षोणीं हरिहरनृपो हर्षकृत्पार्षदानां
विद्यातीर्थप्रवरमुनये प्रार्पयमास भक्त्या ॥ ५० ॥

बुक्कक्ष्मेन्द्रः शुचमधिगतो वैद्यदुःसाधरोगा-
त्स्वस्रं पुण्यैरलभत चर क्षिप्रमारोग्यमाप्तुम् ।
विद्यातीर्थप्रशमिसविधं भक्तिमानित्यमात्यै-
रालोच्यामुं निरणयदथो शृङ्गपुर्यां प्रयातुम् ॥ ५१ ॥

निर्गत्य श्रीविजयनगरात्सर्वसेनासमेतो
भूमीपालैः पथि पथि करैः सेवितश्चोपचारैः ।
यातः पुर्याः सविधमथ स स्थापयित्वा चमूं स्वां
दूरे योगिप्रवरनिकटं बुक्कराजः समागात् ॥ ५२ ॥

वैराग्येणाप्रसितहृदयं राजलोकावलोके
ध्यानारूढं परिजनगिरा प्रार्थयन् तं विलोक्य ।
सार्थं जन्माकलयत ततोऽनामयोऽभूदयत्ता-
त्तत्सेवायै मुदितहृदयो वृत्तिभूमीरदाच्च ॥ ५३ ॥

ख्यातो दाता सकलसुजनस्तोत्रपात्रं चरित्रै-
र्मौनीन्द्रानुग्रहमधिगतो लब्धसंपत्तिरेषः ।
प्राप्यानुज्ञामथ मुनिपतेर्भारतीकृष्णतीर्था-
त्संप्राप्ताशीर्विजयनगरीं पूर्णकामः प्रतस्थे ॥ ५४ ॥

ब्रह्मोपेन्द्राद्यनुसृतमहेशानलिङ्गात्मतैषी
शिष्ये न्यस्याखिलनिजतपोराज्यभारं यतीन्द्रः ।

योगाभ्यासात्सकलविदयं लम्बिकायोगचर्या-
रीतिं सिंहाद्रिवसतिरुपादर्शयत्पार्षदेभ्यः ॥ ५५ ॥

प्राग्वाहिन्याः प्रविमलतटे तुङ्गभद्रातटिन्याः
गम्भीरोद्यन्महिमविलसच्छारदाम्बासमीपे ।
शुद्धाद्वैतोज्ज्वलमतिरयं लम्बिकायोगनिष्ठो
योगिश्रेष्ठो न्यधित हृदयं शम्भुलिङ्गात्मभावे ॥ ५६ ॥

यातेष्वेवं कतिपयदिनेष्वत्र विघ्नात्समाधे-
श्छात्रायासौ त्वरितमदित स्वप्नमासन्नगाय ।
शैवं लिङ्गं प्रणतवरदं स्थापयन्स्वोर्ध्वभागे
कुर्वन्नर्चां यतिवर जनान्प्रापयेष्टं भुवीति ॥ ५७ ॥

बुक्कक्षोणीरमणसविधं वृत्तमेतत्स शिष्यः
प्रैषीदुक्त्वा कमपि सुमतिं साकमाशास्तिपत्र्या ।
अभ्युद्गच्छन्कृतबहुमतिर्मस्तके धारयंस्तां
मेने चित्रं स हृदि निखिलं मन्त्रिभिर्वाचयित्वा ॥ ५८ ॥

द्रव्यं देवालयविरचने माधवामात्यहस्ता-
त्प्रैषीत्तोषी स च नरपतिः प्रौढविज्ञप्तिपत्र्या ।
आलोक्यैनामपि च सचिवं भारतीकृष्णतीर्थः
श्रीमान्योगी विबुधविनुतः प्राप हर्षप्रकर्षम् ॥ ५९ ॥

विद्याशङ्करसद्गुरोर्नतजनाभीष्टप्रदद्योतरो-
र्लोकाश्चर्यकृदालयस्य यतिराट् शैवादितन्त्रार्थवित् ।
आकार्याखिलशिल्पिनः सुचतुरान्सर्वत्र देशे स्थिता-
ञ्ज्ञानानो वरवास्तुशास्त्रगदितं प्रास्तोष्ट निर्मापणम् ॥ ६० ॥

इति श्रीगुरुवंशे महाकाव्ये षष्ठः सर्गः ॥

## ॥ विशेषसूचना ॥

### ( षष्ठे सर्गे )

श्लो० १-२—

'श्रीविद्यारण्यकृपया भवान् महाराजः सन् राजसिंहासनमधिरूढो भवेः' इति उक्तवान् रेवणसिद्धयोगी 'श्रीचन्द्रमौळीश्वरलिङ्गदर्शनं कुरु' इत्यपि ब्रवीति । एतच्च लिङ्गं शृङ्गेरीश्रीमठे वर्तते । एतेन 'शृङ्गेरीमठशिष्यो भव' इत्यपि तस्य योगिनो भावः सम्यक् ज्ञायते । किंच 'हरिहरादारभ्य त्रयस्त्रिंशत् राजानः भूमिं परिपालयेयुः । ततः परं वीरवसन्तो नाम प्रथितः कश्चन राजा भविष्यति' इत्यपि तेन योगिना उक्तम् । लिङ्गायतग्रन्थेषु 'वचनानि' इति कश्चन भागो विद्यते । तत्रापि वीरवसन्तो भविष्यति इति दृश्यते ॥

श्लो० ४—

तृतीयवल्लालेन सह संप्रवृत्ते द्वितीययुद्धे हरिहरः वल्लालमजयत् ।

श्लो० ८—

१२५८ शके धातृनामकसंवत्सरे वैशाखशुक्लसप्तम्यां मघानक्षत्रे भानुवासरे विजयनगरीनिर्माणं वर्णितम् । अयं १३३६ तमे क्रैस्तवाब्दे एप्रल् मासे १८ तमदिवसं ज्ञापयति ॥

श्लो० ४२—

हरिहरमहाराजः स्वकीयराजबिरुदानि सर्वाण्यपि विद्यारण्यस्वामिने समर्पयामासेति वर्णितम् । तस्मात् विद्यारण्यकालादारभ्य शृङ्गेरीजगद्गुरवः सर्वेपि 'कर्णाटसिंहासनप्रतिष्ठापनाचार्याः' इत्यादिनैकबिरुदालंकृता विराजन्ते ॥

श्लो० ४६—

हरिहरमहाराजस्य पट्टाभिषेकं निर्वर्त्य तस्मै सदुपदेशं च कृत्वा विद्यारण्यमुनीन्द्राः तीर्थयात्रां विधातुं वाराणसीकेदारादिक्षेत्राण्यगमन् इति वर्णितम्। एतेन 'सचिवपदे स्थित्वा राजशासनमनुससार विद्यारण्यः' इति केषांचित् वचनं अत्यन्तं बाधितं असंभावितं धीमद्भिर्न ग्राह्यमिति स्पष्टं ज्ञायते। विद्यारण्यविषये आचार्यदेवताभावनासंयुतः हरिहरः कथं वा तं स्वीयशासनानुसरणकर्मणि प्रेरयेत्?

श्लो० ४९—

वाराणस्यां विद्यारण्यः द्वौ मठौ कारयामासेति वर्णितम्। अधुनापि तत्र विराजमानः शृङ्गेरी श्रीजगद्गुरुसंस्थानसंबन्धी मठः तद्वचनं सत्यापयति॥

श्लो० ५९—

बुक्कराजसचिवः माधवामात्यः पश्चिममण्डलाधिपतिश्चाभवत्। आङ्गिरसगोत्रोद्भवोऽयं चावुण्डमच्चाम्बिकयोः पुत्रः। सायणभ्राता माधवस्तु एतस्मादन्यः। माधवः, सायणः, भोगनाथः एते त्रयोपि भारद्वाजगोत्रोद्भवाः मायणश्रीमत्योस्तनयाः॥

## NOTES

VV 1-2 Revaṇa Siddha who predicts that Harihara will rule over a kingdom with the blessings of Sage Vidyāraṇya, exhorts him to worship Chandramauliśvara Liṅgam. This perhaps is an exhortation that Harihara should be a disciple of the Sringeri Maṭh where this Liṅgam is in worship. He further predicts that 33 kings beginning with Harihara will rule over the new kingdom, and later will come to power a king Vīravasanta by name. This is

in accord with the messianic forecast of the appearance of an ideal king Vīravasanta contained in the *vachanas* of contemporary Lingāyat religious literature.

V 4 Second and successful encounter with Ballāla III.

V 8. *Śaka* 1258; *Dhātu* year; *Vaiśākhaśukla*: *Makhānakshatra*. These details correspond to April 18, 1336.

V 42. Note that Harihara dedicated all his royal insignia to Vidyāraṇya. Henceforth the Jagadgurus of Sringeri came to be addressed as *Karnāṭasimhāsana Sthāpakāchārya*.

V 46. After installing Harihara on the throne and giving him sage counsel, Vidyāraṇya left Vijayanagar on a pilgrimage to Kedar, Vārānasi etc. This gives the lie direct to the belief that Vidyāraṇya stayed in the royal court as a minister of the king. Harihara's reverence for the sage was too sublime to make him a servant at his Court.

V 49. The present Sringeri Maṭh at Vārānasī stands as a reminder to the two maṭhs that Vidyāraṇya raised in that city.

V 59. Mādhavāmātya (Mādhava mantrin) a minister of Bukka and Governor of the Western provinces was a son of Chavuṅda and Machchāmbikā. (Āṅgirasa Gotra) He was different from Mādhava, brother of Sāyaṇa. Mādhava, Sāyaṇa and Bhoganātha were the sons of Māyana and Śrīmatī of the Bhāradvāja Gotra.

---

## सप्तमः सर्गः ॥

श्रीमान्योगी भारतीकृष्णतीर्थः
कारुस्तोमेनागतं जक्कणाख्यम् ।
शिल्पिश्रेष्ठं सद्गुरोः स्फारतुङ्गं
प्रासादं त्वं द्राग्विधानेत्यवादीत् ॥ १ ॥

प्रोचे शिल्पी योगिराजं ततोऽयं
बद्धा बह्व्यो देवशाला मयोर्व्याम् ।
बद्धुं शक्या तासु चित्राधिकैषा
सार्था च स्याच्छिल्पिताभ्यासिता मे ॥ २ ॥

तत्तादृक्षं देवगेहं विधातुं
वित्तं संख्यातीतमुत्सर्जनीयम् ।
भूयांस्येवं पोषयेऽहं कुटुम्बा-
न्येतत्कार्यं कर्तुमेव प्रयत्नात् ॥ ३ ॥

भारः किं ते सह्य आर्येति सूक्तो-
प्यङ्गीचक्रे तापसेन्द्रस्तमर्थम् ।
एतद्वैधं भूरिवित्तव्ययेऽथ
ज्ञातुं प्रोचे देशिकेन्द्रं स शिल्पी ॥ ४ ॥

एहि स्वामिन्प्राज्यमादाय वित्तं
नद्यास्तीरे शाकुनं किंचिदीक्षे ।
विश्वासायावश्यमित्यस्य वाचं
श्रुत्वायासीत्तत्र शीघ्रं यतीन्द्रः ॥ ५ ॥

भूरिद्रव्यं पूरयित्वाञ्जलौ स्वे
योगिन्नद्यां पातयेत्यस्य वाणी ।
यावद्वक्तान्निःसरत्याशु ताव-
त्तस्यामर्थं पञ्चशोऽपातयत्सः ॥ ६ ॥

ज्ञाते धैर्ये शिल्पिना योगिराजः
प्रारेभे तत्कच्छपस्थापनादि ।
नित्यं नित्यं तत्कृते द्रव्यदायी
सङ्ख्यां पत्र्यां लेखितुं नान्वजानात् ॥ ७ ॥

तुष्टाः पुष्टाः शिल्पिनोऽनल्पशोभं
देवागारं पूर्णकामा बबन्धुः ।
एतद्दृष्ट्वा विश्वकर्मापि चित्रं
सृष्टिः किं वा स्वेत्यवाप्तभ्रमोऽभूत् ॥ ८ ॥

चक्रुः पङ्क्तीरूर्ध्वमूर्ध्वं समन्ता-
द्गन्धर्वाणां कुञ्जराणां हरीणाम् ।
मर्त्यर्षीणां किंच रात्रिंचराणां
गन्धर्वाणां चित्रितानां शिलासु ॥ ९ ॥

येनायं षड्दर्शनस्थापनेश-
स्तेनास्याभाद्द्वारषट्केन वेश्म ।
ऊर्ध्वं विघ्नेशानवाग्भ्यां च पार्श्व-
द्वन्द्वे मध्ये हस्तिलक्ष्म्यन्वितेन ॥ १० ॥

प्रादक्षिण्येनाभितोऽस्याकृतीनां

भित्तौ श्रेणी भासते देवतानाम् ।

मार्तण्डादिद्योचराणां नवानां
मूर्तिर्मृत्योश्चित्रगुप्तस्य चैवम् ॥ ११ ॥

श्रीमल्लक्ष्मीनारसिंहस्य साक्षा-
दिष्टार्थानां दातुराभाति रूपम् ।
श्रीमद्व्न्द्योमामहेशस्य चैवं
वर्वर्ति श्रीदक्षिणामूर्तिमूर्तिः ॥ १२ ॥

श्रीगायत्री भक्तयुग्मेन युक्ता
लोकेशानां पङ्क्तिरेवं नवानाम् ।
दैत्यारातेश्चारवश्चावतारा
मार्कण्डेयाश्लिष्टमृत्युंजयोऽपि ॥ १३ ॥

गौरीशम्भ्वोः षण्मुखासक्तिभाजो-
श्चेतोहारिण्यर्धनारीश्वरस्य ।
मूर्तिः किं च त्रैपुरान्तक्यपीड्या
विद्धस्यैवं मारबाणैः पुरारेः ॥ १४ ॥

ख्याता मूर्तिर्भाति चैदम्बरी सा
वध्यं कंचिच्चूर्णयन्ती पदेन ।
पीयूषाढ्यान्बिभ्रतोऽदभ्रकुम्भा-
नायुर्दातुः किं च मृत्युंजयस्य ॥ १५ ॥

सच्छिष्येभ्यो बोधयन्स्वं रहस्यं
वाजिग्रीवो राजते पूज्यमानः ।
दर्वीं बिभ्रत्यन्नपूर्णा च वर्ण्या
वर्णेशानी शारदाम्बाखिलाम्बा ॥ १६ ॥

हृल्लेखेशी प्रोल्लसज्ज्ञानदात्री
पार्श्वेभार्ग्यां स्थापिता लोकमाता ।
धीरैर्नम्याश्चारवो भैरवाश्च
ध्यायद्रुद्रो वीरभद्रोऽपि भृङ्गी ॥ १७ ॥

हर्ता विघ्नान्हस्तिवक्त्रो द्विहस्तः
सुब्रह्मण्यः सेवकानां शरण्यः ।
एवं देवाश्चित्रितास्तत्र पङ्क्तौ
पार्थक्येनाप्यालयार्हा विभान्ति ॥ १८ ॥

तस्याः श्रेण्या ऊर्ध्वतः खेचराणां
रेखा लोकालोकनीया विभाति ।
एवं देवा आवृण्वन्तो वसन्ति
श्रीमद्विद्याशंकरं देवदेवम् ॥ १९ ॥

षड्द्वाराणां द्वादशद्वारपाला
अत्यन्तोच्चप्रस्फुरन्मन्दिरस्य ।
तत्राप्येवं चित्रिता देवताश्चा-
शेषाः शेषेणापि वक्तुं न शक्याः ॥ २० ॥

देवैः सेव्यो जातरूपप्रकाशी
शैलैः पादैः संवृतो देवगेहैः ।
तुंगैः शृंगैः संगतः शंकरस्या-
वासः सोऽयं मेरुरेवावभाति ॥ २१ ॥

प्रादक्षिण्यं कस्य कुर्याम देवे-

ष्वेवं प्रष्टुं राशयो द्वादशापि ।

स्तम्भेष्वन्तर्द्वादशस्वाश्रयन्तः
साक्षान्मेषाद्यात्मनैक्ष्यन्त लोकैः ॥ २२ ॥

बुक्कक्ष्मेन्द्रो माधवं मन्त्रिधुर्यं
धीमद्वर्यं प्रैषयत्तन्नियोगात् ।
भूमीपाला भासमानाः समन्ता-
द्व्यायाताः साकमेतेन सर्वे ॥ २३ ॥

आकार्यैवं सर्वतः कोविदाग्र्या-
न्पुर्या वीथीस्तोरणाद्यैर्विभूष्य ।
मान्यैर्मन्त्रैस्तन्त्रगैस्तान्त्रिकेभ्यः
प्रादाल्लिङ्गस्थापनायाभ्यनुज्ञाम् ॥ २४ ॥

लग्ने सौम्ये साधु विघ्नेशपूजां
पुण्याहश्रीवाचनं किं च नान्दीम् ।
मुन्याज्ञप्तः सादरं सत्पुरोधा
आधायर्त्विक्स्तोमवर्यां वितेने ॥ २५ ॥

देशाद्देशादागतैः श्रोत्रियौघै-
राम्नायानां भूरिपारायणानि ।
शैवादीनां सन्मनूनां जपांश्चा-
स्तोकाल्लोकश्रीकरोऽचीकरत्सः ॥ २६ ॥

औदार्योद्यद्योगिराजो नियोगा-
च्छिल्पीन्द्रं सोऽनल्पशिल्पप्रतीतम् ।
संमानार्हैर्वस्त्रभूषाधनाद्यै-
र्हर्षोत्कर्षं साकुलं प्रापिपच्च ॥ २७ ॥

शिल्पीन्द्रात्प्रासादमादाय दातु-
श्चक्रे पात्रेष्वङ्कुरारोपणानि ।
लिङ्गस्यैवं साधुतोयाधिवासं
शुद्धिं तस्याप्येष चक्रे विधिज्ञः ॥ २८ ॥

आधान्मोदाद्बिम्बशोधं पुरोधा
द्वैतीयीके तस्य धान्याधिवासम् ।
तार्तीयीके त्वह्नि शीलैर्विशिष्टः
शिष्टैर्जुष्टः सुप्रतिष्ठापनं च ॥ २९ ॥

विघ्नेशादीनेतदावारदेवान्
सुस्थाप्याधात्सद्ध्वजारोहणं च ।
तोषादेष प्राग्र्यशालाप्रवेशं
जन्माप्यग्नेस्तत्र होमं च सर्वम् ॥ ३० ॥

शान्तिप्रायश्चित्तचर्यां तुरीये
पञ्चब्राह्मान्पञ्चमे किं च होमान् ।
श्रेष्ठः षष्ठे तां दिशाहोममुख्यान्
चक्रे लिङ्गश्रीनिरीक्षां यथावत् ॥ ३१ ॥

होमं चक्रे सप्तमे चाधिवासं
साहस्रेणास्याभिषेकं सुकुम्भैः ।
प्रोद्यद्दिव्याशङ्करेशस्य हृद्यं
जाह्नव्याद्यैः पूरितैः पुण्यतोयैः ॥ ३२ ॥

प्राज्ञैः शिष्टैर्वेदघोषैर्विशेषा-
द्राज्ञी स्तोमयोगिराजोऽष्टमेऽह्नि ।

रम्यं विद्याशङ्करस्योत्सवाख्यं
नृत्यैर्वाद्यैः श्रीरथेऽकारयत्सः ॥ ३३ ॥

अत्युत्साहात्साधुतिथ्यां नवम्यां
दायं दायं गन्धतोयं प्रजाभ्यः ।
मोदादाधादुत्सवं कुङ्कुमाख्यं
दीक्षान्तार्हं मङ्गलस्नानमेवम् ॥ ३४ ॥

योगीन्द्रोऽयं दक्षिणादानभूम्ना
सर्वानृत्विक्सूरिणः संप्रतोष्य ।
भूदेवेभ्यो भूरिमृष्टान्नदानं
लोकाश्चर्यौदार्यशीलः प्रचक्रे ॥ ३५ ॥

हृद्यां विद्याशङ्करेशप्रतिष्ठां
सद्यो भक्ताभीष्टदात्रीं विधाय ।
संभाव्यैतान्माधवामात्यमुख्या-
न्प्राप्तांस्तोषात्प्रैषिषत्सर्वभूपान् ॥ ३६ ॥

एतद्वृत्तं लेखयित्वा समस्तं
बुक्कक्ष्मेन्द्रासन्नमाशास्तिपत्रीम् ।
वेद्यां विद्याशंकरस्य प्रसादं
प्रैषीद्योगीन्द्रोऽथ मन्त्राक्षतांश्च ॥ ३७ ॥

काशीस्थायाकारणाज्ञप्तिपत्रीं
विद्यारण्यश्रीमुनीन्द्राय सैषः ।
तं प्रत्येवं प्राहिणोत्प्रेषयेति
स्फीतप्रीतिर्भारतीकृष्णतीर्थः ॥ ३८ ॥

पत्रीमेतां माधवार्येण दत्तां
भक्त्या धृत्वा मूर्ध्नि संतोषसान्द्रः ।
तस्मै स्वीयां चापि विज्ञप्तिपत्रीं
वाराणस्यां प्राहिणोत्पार्थिवेन्द्रः ॥ ३९ ॥

विद्यारण्यः श्रीमुनीन्द्रोऽपि वृत्तं
सर्वं ज्ञात्वा हर्षवान्सर्वशिष्यैः।
आदायेशस्वप्नसंप्राप्तलिङ्गं
मोदादागात्पूजितो राजधानीम् ॥ ४० ॥

संभाव्यैनं संभ्रमाद्बुक्कभूपो
विद्यारण्यं मान्यमौन्यग्रगण्यम् ।
साकं तेनास्तोकभक्त्या समेतः
श्रेयस्कर्यां शृङ्गपुर्यां समागात् ॥ ४१ ॥

दृष्ट्वा ज्येष्ठं तुष्टिमान्पट्टभद्रं
भास्वत्कीर्तिं भारतीकृष्णतीर्थम् ।
नत्वा क्षेमप्राश्निकस्तापसेन्द्रः
सर्वं वृत्तं भाषिता तोषमाप ॥ ४२ ॥

शं भाषित्वान्योन्यसंतोषवन्तौ
श्रीमद्विद्याशंकरेशस्य सद्म ।
विद्यारण्यो भारतीकृष्णतीर्थ-
श्रीभौ नत्वा हर्षवर्षानगाताम् ॥ ४३ ॥

चक्राते च प्रीतिसान्द्रौ मुनीन्द्रौ
स्तोत्रं स्वस्वप्रौढिकार्यानुरूपम् ।

युष्मत्पुण्यं पूर्णमेवेति मन्ये
कार्यैश्चित्रैरित्यवादीन्नृपस्तौ ॥ ४४ ॥

सर्वोऽप्येषस्त्वद्विभूतिप्रभाव-
स्त्वं रुद्राक्षागण्यकारुण्यपालम् ।
उद्यत्पुण्यश्रीफलानां निधानं
चेत्याचख्यौ भारतीकृष्णतीर्थः ॥ ४५ ॥

श्रीमद्विद्यातीर्थयोगानुभावा-
ज्ज्ञातं सर्वं यद्युवां तत्कराब्जात् ।
चित्रं लब्धानुग्रहौ संविभाथः
शिष्योऽहं वां मा स्तुतं त्वित्यवोचत् ॥ ४६ ॥

इत्युक्त्वायं बुक्कभूमीधरेन्द्रो
विद्यारण्यानीतलिङ्गप्रतिष्ठाम् ।
साकं सद्वृत्त्यग्रहारादिधर्मैः
श्रीमद्विद्याशंकरप्रेम्ण आधात् ॥ ४७ ॥

आदायाज्ञामेनयोर्बुक्कराजः
सार्धं सैन्यैः स्वां पुरीं संप्रपेदे ।
विद्यासान्द्रौ सद्यतीन्द्रौ चितन्द्रौ
पूर्णस्नेहौ शृङ्गपुर्यामथास्ताम् ॥ ४८ ॥

भारं न्यस्यन्भारतीकृष्णतीर्थो
विद्यारण्ये हृद्यविद्वद्वरेण्ये ।
अर्चन्विद्याशङ्करेशं करेण
प्रापत्सोऽयं मोक्षसाम्राज्यलक्ष्मीम् ॥ ४९ ॥

सिद्धिं प्राप्तं तमवकलयन्भारतीकृष्णतीर्थं
बुक्कक्षोणीपतिरपि तदैवाप लोकान्तरं सः ।
श्रुत्वा वार्तां हरिहरमहीशस्य पट्टाभिषेकं
विद्यारण्यो विजयनगरं प्रार्थितः कर्तुमैषीत् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यादिविरुदावलीविराजित श्रीमन्नृसिंहभारती करकमलसञ्जात सकलविद्याविशारद पण्डितपुण्डरीक मण्डलीमार्ताण्ड-श्रीसच्चिदानन्दभारतीमुनीन्द्रनिर्मापिते विद्वद्बालकलक्ष्मणशास्त्रिविरचिते गुरुवंशे महाकाव्ये सप्तमः सर्गः ॥

---

## ॥ विशेषसूचना ॥

### ( सप्तमसर्गे )

श्रीभारतीतीर्थस्वामिनः १३०२ शके रौद्रिनामसंवत्सरे भाद्रपद-शुक्लद्वादश्यां ( १३८० तमे क्रैस्तवाब्दे आगस्ट् १३ दिवसे) विदेहमुक्तिमगमन् । एतदनन्तरं बुक्कक्षोणीपतिरपि लोकान्तरमापेत्युक्तम् । एतच्च बुक्कराजमरणं १३८० तमसंवत्सरस्यान्तिमे भागे संजातं स्यात् । चरित्रचिन्तकाः केचित् १३७७ तमसंवत्सरे बुक्कराजो मृतिमगमत् इति ब्रुवन्ति । अनयोरुभयोर्विरोध इत्थं परिहरणीयः — बुक्कराजः शरीरास्वास्थ्यात् १३७७ संवत्सरे एव राज्यभारं सर्वमपि स्वीये कुमारे हरिहरे (२) विनिक्षिप्य स्वयं सर्वस्मादपि उपरतो न्यवसत् । १३८० तमे वत्सरे तस्य मरणं संजातम् । ततः श्रीविद्यारण्यः हरिहरमहाराजस्य पट्टाभिषेकं कारयामास ॥

एतेषां च राज्ञां कालनिर्णयः इत्थम् —

| | | | | | |
|---|---|---|---|---|---|
| हरिहरः | (प्रथमः) | १३३६ | प्रभृति | १३५७ | A. D. |
| बुक्कः | (प्रथमः) | १३४४ | प्रभृति | १३७७ | ,, |
| हरिहरः | (द्वितीयः) | १३७७ | प्रभृति | १४०४ | ,, |

१३७० प्रभृति १३८० पर्यन्तं हरिहरः स्वपितुः राज्यनिर्वाहे साह्यं कुर्वन्नासीत् । एतादृशो द्वयोः संयुक्तराज्यनिर्वाहः दाक्षिणात्यराजचरित्रे बहुत्र दृश्यते ॥

## NOTES

**V 49. Śrī Bhārati Tirtha attained *vidēhamukti* on *Śukla-dvādasi* day; *Raudhri* year *Śaka* 1302. (13th August 1380). Bukka is said to have died shortly after this event. He must have died in late 1380. There is a short discrepancy in this. Some historians have put down 1377 as the date of the termination of his reign. It may be that he formally gave up the reins of Government in 1377 in favour of his son Harihara II who was ceremoniously crowned emperor on the death of his father in 1380. Vidyāraṇya crowned him.**

| | | | |
|---|---|---|---|
| **Dates:** | **Harihara I** | **...** | **1336 — 1357** |
| | **Bukka I** | **...** | **1344 — 1377 (?)** |
| | **Harihara II** | **...** | **1377 — 1404** |

**Between 1377 and 1380 Harihara must have been joint-ruler. Such joint-rulership is very common in the history of the South Indian dynasties.**

# अष्टमः सर्गः ॥

श्रीविद्यारण्यमायातं श्रुत्वाऽभ्युद्गम्य भक्तितः ।
श्रीमान्हरिहरक्ष्मेन्द्रः स्वमन्दिरमनीनयत् ॥ १ ॥

राजोपचारैः संपूज्य योगिसम्राजमादरात् ।
बद्धाञ्जलिः पुरः स्थित्वा प्रार्थयामास सोऽर्थितम् ॥ २ ॥

संमानितः कुलगुरुः संभारैः संभ्रमेण तम् ।
गुरुर्दिवस्पतिमिव व्यधात्साम्राज्यदीक्षितम् ॥ ३ ॥

अथामुष्मै महाराजः प्रहर्षाद्विनयान्वितः ।
महान्ति राजचिह्नानि तदा स निखिलान्यदात् ॥ ४ ॥

पादुके रत्नखचिते ध्यातृचित्तप्रमोदिके ।
भरतो राघवायेव प्रादान्मोदान्महीपतिः ॥ ५ ॥

सिंहासनेऽर्पिते राज्ञा सोपधाने मुनिर्बभौ ।
मुक्ताढ्ये पावको वेद्यामास्तीर्णपरिधाविव ॥ ६ ॥

नक्रास्यान्दोलिकां सिंहललाटैश्च शुभां ददौ ।
पट्टाभिषिक्तो राजाऽस्मै वसिष्ठायेव राघवः ॥ ७ ॥

दिवाप्रदीपद्वन्द्वेन राजदत्तेन योगिराट् ।
पार्श्वस्थगुरुशुक्राभ्यां मार्ताण्ड इव स व्यभात् ॥ ८ ॥

समर्पणेन भूचक्रच्छत्रस्यासूचयन्नृपः ।
अयं भूमण्डलाचार्यः चक्रवर्ती स्वयं त्विति ॥ ९ ॥

श्वेतच्छत्रयुगं राज्ञा दत्तमस्य पुरो बभौ ।
आचारज्ञानसाम्राज्ययुगलस्येव सूचकम् ॥ १० ॥

पार्श्वस्थशंखचक्राभ्यां प्रदत्ताभ्यां महीभुजा ।
अशोभत स योगीन्द्रो महाविष्णुरिव क्षितौ ॥ ११ ॥

भूसुराणां सुराणामप्युभयेषां श्रियाऽन्वितः ।
उच्चामरश्रीयुगलयुक्तोऽयं शक्रमत्यगात् ॥ १२ ॥

सालोक्यदापकोपास्तिबोधैर्दानैर्नृपश्रियाम् ।
जगद्दीपकसंज्ञाभ्यां छत्राभ्यां मुनिरैधत ॥ १३ ॥

तथा मेघाम्बरच्छत्रे उन्नते अग्रतः स्थिते ।
मनीषिनीलकण्ठानां प्रमोदनविवर्धिनः ॥ १४ ॥

कर्त्तर्याकृतिदण्डाग्रग्रसनं सूर्यपानयोः ।
असूचयदिवान्योक्तिग्रासं नैसर्गिकं गुरोः ॥ १५ ॥

पार्श्वद्विसिन्धुनक्राक्तं प्रायो मकरतोरणम् ।
योगिराज्यस्य सीमानः समुद्रा इत्यबोधयत् ॥ १६ ॥

व्यञ्जयन्ती वीररसमुत्साहस्थायिभावकम् ।
पताका पीतवर्णाऽस्य राजदत्ता व्यराजत ॥ १७ ॥

शंखसूर्येन्दुडमरुचक्राद्यैः पार्थिवार्पितैः ।
हृदयानि ध्वनद्वाद्यैः भेदं भेदविदामगुः ॥ १८ ॥

विरुदान्येवमादीनि समर्प्य नृपपुङ्गवः ।
आययौ भङ्गनगरीं मुनीन्द्रेण सहामुना ॥ १९ ॥

विद्यारण्यमुनीन्द्रेण नियुक्तः पार्थिवेश्वरः ।
भारतीकृष्णतीर्थस्य देवालयमकारयत् ॥ २० ॥

तत्र लिङ्गं प्रतिष्ठाप्य भक्त्या स्वयमपूजयत् ।
तदा मुदे मुनेः प्रादात् वदान्यो बहुलां भुवम् ॥ २१ ॥

दत्तानां स्वेन पूर्वैश्च वृत्तीनां ताम्रशासनम् ।
मेदिनीन्द्रो मुनीन्द्रस्य प्रेम्णाऽदाद्द्विजपङ्क्तये ॥ २२ ॥

शुश्रूषुभ्यो द्विजाग्र्येभ्यो वृत्तीर्नृपसमर्पिताः ।
विद्यारण्यमुनीन्द्रोऽयं यथार्हं विन्ययूयुजत् ॥ २३ ॥

श्रीमच्छृङ्गपुरं रम्यं विद्यारण्यपुरं तथा ।
अग्रहारौ विराजेते भुजाविव गुरुश्रियः ॥ २४ ॥

मलहानिकरं लिङ्गं विभाण्डकसमर्चितम् ।
शृङ्गपुर्याः शृङ्गमिव गिरिशृङ्गे विराजते ॥ २५ ॥

पूर्वाद्यासु चतुर्दिक्षु रक्षणाय प्रतिष्ठिताः ।
श्रीमद्भैरवदुर्गाम्बाहनुमत्कालिकाम्बिकाः ॥ २६ ॥

कृतं सर्वं समालोक्य हर्षाद्धरिहरो नृपः ।
मुनीन्द्रेणाभ्यनुज्ञातः धन्यः स्वां नगरीमगात् ॥ २७ ॥

श्रीविद्याशंकरस्वामिन्यावेद्य सकलाः क्रियाः ।
विद्यारण्यमुनीन्द्रोऽयं चिरं तत्र मुदा बभौ ॥ २८ ॥

चन्द्रशेखरभारत्याख्यानमिन्द्रगुरूपमम् ।
आध्यात्मिकधिया मान्यं शिष्यमन्वग्रहीत्ततः ॥ २९ ॥

चन्द्रशेखरयोगीन्द्रः संप्रार्थ्य गुरुमादरात् ।
अधिगत्य ततोऽनुज्ञां तीर्थानि चरितुं ययौ ॥ ३० ॥

तदा संद्रष्टुमायातो महीन्द्रः प्रार्थयद्गुरुम् ।
दर्शनं प्रददन्नित्यं दयां कुरु दयाकर ॥ ३१ ॥

अङ्गीकृत्य गिरं तस्य रक्षितुं स्वमठश्रियम् ।
नृसिंहभारतीं शिष्यं प्रेम्णा पर्यग्रहीदसौ ॥ ३२ ॥

स्वयं श्रीमद्धरिहरमहाराजेन संगतः ।
गत्वा पंपापुरीं तत्र नित्यं संपूजितोऽन्वभात् ॥ ३३ ॥

विद्यारण्यमहायोगी निगमाम्बुधिपारगः ।
हृद्यामाध्यात्मिकीं विद्यामुपादिक्षन्महीभृते ॥ ३४ ॥

एवं बहुविधे काले गते योगीन्द्रपुंगवः ।
श्रीविद्याशंकरं ध्यायन् प्रपेदे परमामृतम् ॥ ३५ ॥

निशम्यैतां गुरोर्वार्तां चन्द्रशेखरभारती ।
तत्रागत्य महीन्द्रेण साकं शृङ्गपुरीमगात् ॥ ३६ ॥

महीन्द्रार्जितसंभारैः प्राप्तः पट्टाभिषेचनम् ।
शशास धर्मराज्यं स शारदाम्बां समर्चयन् ॥ ३७ ॥

नृसिंहभारतीन्द्रश्च गोकर्णेशदिदृक्षया ।
गतो ज्येष्ठाभ्यनुज्ञातो हालाडिग्राममाययौ ॥ ३८ ॥

मन्त्रविन्मन्त्रराजं तं संप्रतिष्ठाप्य तत्र सः ।
चिरमध्यास्य चागत्य ज्यायसोऽनन्तरं बभौ ॥ ३९ ॥

योगिराजे मुदा यस्मिन् योगराज्यं प्रशासति ।
भक्तिमान् विक्रमाख्योऽभूच्चक्रवर्तिधुरंधरः ॥ ४० ॥

समागत्य समीपेऽस्य योगभाजो महामुनेः ।
योगार्थं नामनि स्वीये विक्रमी प्रत्यपद्यत ॥ ४१ ॥

विमृशन् वेदभाष्यार्थान् वेदान्तासक्तमानसः ।
ख्यातो नृसिंहयोगीन्द्रः सन्मार्गं समपीपलत् ॥ ४२ ॥

प्राज्ञं पर्यग्रहीच्छिष्यं पुरुषोत्तमभारतीम् ।
पुरुषोत्तमभावेन स्तूयमानं महागुणैः ॥ ४३ ॥

बुक्कराजाख्यपृथ्वीशः सत्कृत्यैनं मुनीश्वरम् ।
अदसीयाशिषा लेभे पूर्वबुक्कनृपोपमाम् ॥ ४४ ॥

चन्द्रशेखरभारत्या नृसिंहाख्ययतेरपि ।
कारयामास विततौ रम्यौ देवालयावयम् ॥ ४५ ॥

पुरुषोत्तम एवासौ लोकानां परिपालने ।
आचार्यनाम्ना शिष्यं स्वीचक्रे शंकरभारतीम् ॥ ४६ ॥

किङ्करीभूतभूपानां शंकरं यद्वचः सदा ।
अन्वर्थभावं संज्ञायाः लेभे शंकरभारती ॥ ४७ ॥

कामधेनूपमानेन लोकाभिलषितार्पणे ।
सेव्यो धेनुकराजेन भव्य एष व्यभासत ॥ ४८ ॥

तस्य शिष्यावुभौ ख्यातौ चन्द्रशेखरभारती ।
नृसिंहभारतीशश्च कुमाराविव धूर्जटेः ॥ ४९ ॥

श्रीरामचन्द्रराजेन परिपूजितपादुकौ ।
क्रमेण योगसाम्राज्यं संप्राप्य प्रथिताविमौ ॥ ५० ॥

सेवनान्यस्य विजयदेवराजमहीपतिः ।
तदा तदाऽकरोद्भक्त्या विजयः श्रीहरेरिव ॥ ५१ ॥

तद्धस्तकञ्जात्सञ्जातः पुरुषोत्तमयोगिराट् ।
विदुषां पोषणे सक्तः सुप्रबन्धानकारयत् ॥ ५२ ॥

छात्रचन्द्रो महांस्तस्य रामचन्द्रमुनीश्वरः ।
मेदिनीन्द्रैः सदा मान्यः भारतीन्द्रो व्यराजत ॥ ५३ ॥

स्वयं नृसिंहश्चरितैः नृसिंहं समुपासिता ।
नृसिंहभारतीनाम्ना शिष्यसिंहं समग्रहीत् ॥ ५४ ॥

श्रीप्रौढदेवराजश्च विरूपाक्षनृपश्च तौ ।
सेवकावेतयोरास्तां देवराजसमश्रियौ ॥ ५५ ॥

द्विगुणः सुगुणैश्छात्रो द्विगुणोपपदान्वितः ।
नृसिंहभारतीन्द्रोऽस्य मुनिसिंहो महान् बभौ ॥ ५६ ॥

स्वनामानुगुणं चक्रे द्विगुणत्वं निजे मठे ।
वशीकृतमहाराजः सफलीभवदाशिषा ॥ ५७ ॥

मल्लिकार्जुनरायोऽमुं मल्लिकार्जुनसंनिभम् ।
रामदेवमहाराजोऽप्यसेवत जगद्गुरुम् ॥ ५८ ॥

यशसाऽभिनवोऽस्याभिनवोपपदशोभितः ।
नृसिंहभारतीनामा छात्रमुख्यो व्यराजत ॥ ५९ ॥

विरूपाक्षमहाराजो विरूपाक्षस्वरूपिणम् ।
तदा तदा परामृश्य मुदा गुरुममानयत् ॥ ६० ॥

कुञ्जरेन्द्रमदादस्मै मञ्जुराजो महादरात् ।
रञ्जितानतलोकाय भञ्जिताखिलवादिने ॥ ६१ ॥

इक्केरीवेङ्कटक्ष्मेन्द्रः सत्कृत्य गुणसौहृदात् ।
स्वीयां पताकां हरितां श्रेयस्कामः समार्पयत् ॥ ६२ ॥

व्यधायि शिवगीतायाः प्रौढसंदर्भबन्धुरम् ।
भाष्यं सूरिभिरन्वेष्यं येन सन्मार्गबोधिना ॥ ६३ ॥

मन्त्रशास्त्रमहाप्रौढः शिलास्तम्भेऽपि कौतुकी ।
मलहानिकरेशाग्रे विनायकमदर्शयत् ॥ ६४ ॥

यस्याभिवर्धते चित्रं रम्या मूर्तिर्दिने दिने ।
मनोभीष्टप्रदानास्था भजद्भ्य इव निश्चिता ॥ ६५ ॥

भक्तविघ्नासुरस्तोमविदारणविचक्षणः ।
नृसिंह इव लोकेषु प्रमोदं समवापयत् ॥ ६६ ॥

नमज्जनमनोवासदृढभावविकासकः ।
प्रशस्ते प्रस्तरस्तम्भे चिरस्थायी चकास्ति सः ॥ ६७ ॥

तन्मन्त्रसिद्धेर्महिमा शंसितुं केन शक्यते ।
विघ्नेश एव यत्पुर्यामाचन्द्रार्कं विवर्धते ॥ ६८ ॥

वेङ्कटेशमहीपालो भूलोकख्यातपौरुषः ।
केलदीमण्डले यस्य गुरोराखण्डलो वशी ॥ ६९ ॥

षड्दर्शनस्थापकस्य श्रीविद्याशङ्करेशितुः ।
हैमान्यकारयद्भूपः शिखराण्यालयस्य षट् ॥ ७० ॥

समार्पिपच्च सद्भक्त्या मुनयेऽस्मै महात्मने ।
तानि वीक्ष्य स आशीर्भिः क्षितीन्द्रं समतूतुषत् ॥ ७१ ॥

अनन्तपद्मनाभस्य कुडुपग्रामभासिनः ।
भ्रान्तीभूतगजभ्रान्तिं मनुनाऽशमयन्मुनिः ॥ ७२ ॥

तदा तदा महाराजसमर्पितमहागजैः ।
साकं तं गजशालायां मुनीन्द्रः समपालयत् ॥ ७३ ॥

लोकेऽस्मिन् कृतकृत्यो यः छात्रसंरक्षणोद्यतः ।
देशान्तरात्समायातमद्राक्षीन्निपुणं वटुम् ॥ ७४ ॥

मौनीन्द्रोऽयं सुमतिमथ तं सच्चिदानन्दभार-
त्याख्यं शिष्यं समनुजगृहे भाविकार्याणि चास्मै ।
प्रोपादिक्षद्यतिपतिरसौ तुङ्गधीः शृङ्गपुर्यां
प्रागाशायां शिशुरविरिवाशोभत श्रीभरेण ॥ ७५ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यादिबिरुदावलीविराजित श्रीमन्नृसिंहभारती करकमलसंजातसकलविद्याविशारदपंडितपुण्डरीकमण्डलीमार्ताण्ड श्रीसच्चिदानन्दभारतीमुनीन्द्रनिर्मापिते विद्वद्बालकलक्ष्मणशास्त्रिविरचिते श्रीगुरुवंशे महाकाव्ये अष्टमः सर्गः ॥

———

## ॥ विशेषसूचना ॥

### ( अष्टमसर्गे )

श्लो० ४ - १८ —

अत्र शृङ्गेरीजगद्गुरूणां राजचिह्नानि सर्वाण्यपि निर्दिष्टानि । एतानि प्रथमतो विजयनगरमहाराजेन हरिहरेण (२) श्रीजगद्गुरवे समर्पितानि । तेषु बहूनि इदानीमपि श्रीजगद्गुरुसमादृतानि विलसन्ति ॥

श्लो० २२ —

विजयनगरमहाराजैर्दत्तानि शासनानि इमानि —

१ १३४६ तमसंवत्सरशासनम् । हरिहरः (१) बुक्कः (१) एतयोः त्रयः सोदराः एते सर्वेऽपि संगत्य शृङ्गेरी श्रीविद्याशंकरालयस्य पुरतः विजयोत्सवप्रवर्तनसमये प्रदत्तमेतत् शासनम् ॥

२ १३५६ तमसंवत्सरशासनम् ॥

३ पूर्वशासनसंबन्धि अन्यत् शासनम् एतत् बुक्कमहाराजेन प्रदत्तम् ॥

४ १३८० तमवत्सरशासनम् । स्वेन पूर्वैश्च दत्तानि शासनानि सर्वाण्यपि एकीकृत्य तदुपरि च अधिकतया क्षेत्रभूम्यादीनि संयोज्य हरिहरेण (२) प्रदत्तमेतत् शासनम् ॥

५ १३८७ तमवत्सरशासनम् । एतदेव विद्यारण्यपुरशासनमित्युच्यते । एतदपि हरिहरेणैव (२) प्रदत्तम् ॥

श्लो० २६ —

शृङ्गेरीनगरसंरक्षणार्थं विद्यारण्यमुनिवरेण प्राच्यां भैरवः, दक्षिणस्यां दुर्गाम्बिका, प्रतीच्यां हनुमान्, उत्तरस्यां कालिका च प्रतिष्ठापिताः ॥

श्लो० ३४ —

विद्यारण्यगुरुवरः हरिहरमहाराजाय अध्यात्मविद्यामुपदिदेश इत्येतमर्थं-मधोनिर्दिष्टश्लोकोपि शासनस्थो ज्ञापयति –

विद्यारण्यमुनीशस्य कृपापूर्णनिरीक्षणात् ।
योलब्ध ज्ञानसाम्राज्यं दुष्प्रापमितरैर्नृपैः ॥

श्लो० ३५ —

विद्यारण्यमुनिः १३८६ (A. D.) तमे वत्सरे (१३०८ शके) विदेहमुक्तिमगमत् । पंपापुर्यां ब्रह्मभूयं गत इति अत्र वर्णितम् । तत्र च मन्दिरं, समाधिः, मूर्तिश्च इदानीमपि दृश्यन्ते । शृङ्गेर्यां परिदृश्यमानः विद्यारण्यालयस्तु तत्पूजार्थं नूत्नतया निर्मापित इति भाति ॥

श्लो० ६० —

अत्रानुवर्णितः विरूपाक्षः विजयनगरमहाराजशासनवशंवदः जम्बूरु-प्रदेशाधिपः राजकः ॥

श्लो० ६३ —

इदं च शिवगीताभाष्यं इदानीं शृङ्गेरी जगद्गुरुश्रीमठे संमुद्र्य प्रकाशितम् ॥

श्लो० ६४ —

स्तम्भे हेरम्बो दृश्यते । शृङ्गेर्यां दृश्यमानेषु अद्भुतेषु एकमेतत् । एतच्च द्रष्टृणां मनांसि आवर्जयति ॥

———

## NOTES

V V 4 to 18. Here is given a long list of the insignia of the Sringeri Jagadgurus bestowed on them by the Vijayanagar emperor Harihara II. Many of them are still in use.

V 22. The following are the grants made by the early Vijayanagar emperors.

1. Grant of A. D. 1346 made when Harihara I, Bukka I and their three brothers met at Sringeri for a *Vijayotsava* before the temple of Śrī Vidyā Śaṅkara. (*E. C.* VI *Sg.* I)

2. of 1356 } by Bukka I
3. a further grant }

(*M A R* 1916 p. 56 ff.) 1933 No. 2

4. of 1380 by Harihara II consolidating the previous grants with further addition of lands.

5. of 1387 a further grant by Harihara II (*M A R* nos. 24 and 33) called the Vidyāraṅyapurā grant.

V 26. The guardian deities of Sringeri were installed by Vidyāraṇya; Bhairava in the east, Durga in the south, Hanuman in the west and Kālikā in the north.

V 34. Harihara was initiated into *ādhyātmika vidyā* by Vidyāraṇya.

*cf* the following verse from the grants.

विद्यारण्यमुनीशस्य कृपापूर्णनिरीक्षणात् ।
योलब्ध ज्ञानसाम्राज्यं दुष्प्रापमितरैः नृपैः ॥

V 35. *Videhamukti* of Vidyāraṇya in 1386 (*Saka* 1308). This *kāvya* says that Vidyāraṇya attained *Videhamukti*

in Pampāpuri, where a *samādhi* of his and his idol worshipped in a shrine are shown even today. The shrine in Sringeri was perhaps intended to commemorate his sacred memory. (*M A R* 1932. p 101)

V 60. Virūpāksha mentioned here was ruler of Jambur, as a feudatory of Vijayanagar.

V 63. *Śivagītābhāshya* – has now been published by the Sringeri Maṭh.

V 64. Gaṇapati on a pillar — this is one of the marvels that attract the devotion and wonder of visitors to Sringeri.



## नवमः सर्गः ॥

अथ सुकृतनिधिः श्रीसच्चिदानन्दभार-
त्यभिधयतिवरेण्यो धीमतामग्रगण्यः ।
नगर इह पुरा सद्वैत्तुधी वर्वृधीति
प्रतिदिनमतिधीरः शुक्लपक्षे शशीव ॥ १ ॥

अभिनवनरसिंहाख्यानयोगीन्द्रविद्व-
द्गुरुवरसविधेऽसावध्यगीष्टाथ विद्याः ।
अखिलनिगमशीर्षाण्यप्यदोभाष्यसारान्
स्मृतिनिवहमशेषाः सत्कलाश्चातिधीमान् ॥ २ ॥

अभिनवनरसिंहप्रख्ययोगीन्द्रमुख्यः
स्व्यकुरुत वरशिष्यं सच्चिदानन्दसंज्ञम् ।
इति निशमयिता श्रीवेङ्कटक्ष्मापतीन्द्रो
बहुमतिवसनानि प्रैषयत्तोषसान्द्रः ॥ ३ ॥

अभिनवनरसिंहं सच्चिदानन्दयोगी-
ऽथ स गुरुमपृच्छत्तस्य राज्ञोऽन्ववायम् ।
तदमलगुणचर्याराज्यसंप्राप्तिवृत्तं
सकलमपि मनीषी सूरिणं भूरिहर्षात् ॥ ४ ॥

निखिलसमयवेदी पृष्टवाक्यानुमोदी
सकलमपि महीभृद्वंशराज्यागमादि ।
वच इदमदसीयं संनिशम्य प्रमोदी
स्फुटमकथयदस्मै योगिराजः सुवृत्तम् ॥ ५ ॥

अथ गुणगणकोशे पावने हैवदेशे
　　सुरसदनकदम्बैः साधुलोकावलम्बैः ।
द्विजवरपरिपूर्णैरग्रहारैश्च वर्ण्ये
　　केलदिनगरमृद्धं संविभाति प्रसिद्धम् ॥ ६ ॥

पुर इह बसवाम्बावल्लभस्योज्ज्वलश्री-
　　विलसितबसवप्पाख्यानपुण्याम्बुराशेः ।
समजनि सुतराजो भाविराजान्वयाद्यः
　　सततसुकृतभूमा साधु चौडप्पनामा ॥ ७ ॥

प्रतिदिनमभिवृद्धः सैष संपत्समृद्धः
　　स्वकृषिभुवि शयानः क्वापि माकन्दमूले ।
अलभत निजशीर्षे भोगिनो भोगलीलां
　　न्यग्रमयि जनयित्र्या हर्षयित्र्या विचित्रम् ॥ ८ ॥

अनुदिनमथ कुञ्जे क्षीरदोग्ध्र्यात्मधेन्वा
　　तदनु वनमुपेत्य ज्ञातवान् शंभुलिङ्गम् ।
लिपिफलकमवाप्यावेत्य रामेशनाम
　　स्वयमनुमतिभक्त्याऽपूजयत्सोऽपि नित्यम् ॥ ९ ॥

सपदि निधिमविन्दत्तन्महिम्ना निजायां
　　भुवि बहलशुभार्थस्वप्नलाभादिहैषः ।
अनुपमकरवालं प्राप्य विख्यातशौर्यो
　　नरपतिपरितोषात्प्राप्तवान्नायकत्वम् ॥ १० ॥

क्षितिमदित च बह्वीं मान्यरामेश्वराय
　　प्रतिदिनमदसीयां वर्धयित्वा सपर्याम् ।

अलभत नृपवंशानन्दनौ नन्दनौ द्वौ
शिवमपि च सदाद्यं भद्रमप्येष नाम्ना ॥ ११ ॥

भुवनमितरदाप ज्यायसि न्यस्तराज्या-
वनसमनुगुणश्रीः स प्रगल्भे तनूजे ।
हुतभुजि दिवसान्ते न्यस्ततेजोविशेषो
रविरिव चरमाद्रिं प्रौढधीश्चौडभूपः ॥ १२ ॥

हृषितजनकदत्तक्ष्माधिपत्ये ततोऽस्मिन्
जयति सकलशत्रून्सर्वतोऽखर्वगर्वे ।
कलितसकलवृत्तो रामराजो नरेन्द्रः
निजरिपुविजयायाकारयच्छूरसेनम् ॥ १३ ॥

तदनु नरपतेर्द्राक् संनिधिं प्राप्य सोऽयं
रणभुवि सह तेनाभ्येत्य शत्रून् जिगाय ।
कट्टुपतनतुरुष्कान् कीर्णभूयःपृषत्कान्
जितपरनृपवर्गं प्राप कल्याणदुर्गम् ॥ १४ ॥

नरपतिरथ शौर्यादस्य चर्यां विचार्य
प्रमुदितहृदयोऽदात्कोटकोलाहलेति ।
विरुदगिरमुदारः प्राज्यमिष्टं च राज्यं
सपदि तदभिधाने रायनाम स्वकीयम् ॥ १५ ॥

अदित बलिबरीदप्रोज्ज्वलत्पातिशाहं
व्यजयत निजशत्रुं चेति हर्षेण भेरीम् ।
ध्वजमरुणपटीकं वैरिसप्ताङ्गशोभा-
हरणगिरममुष्मै किंच नामानि पञ्च ॥ १६ ॥

अधिसमरमसाध्यान् केरळान् तौळवेशा-
न्नपि यडवमुरारी दुर्जयौ निर्जयन्तम् ।
सविरुदबहुमानैस्तोपयन्नेष सम्राट्
केलदिनगरमेतं प्रेषयामास तोषात् ॥ १७ ॥

केलदिपुरमुपेतः सैष रामेश्वराय
प्रचुररुचिरभूम्याद्यर्पयन् सागराख्यम् ।
नगरमपि विधाप्य स्वाख्यया चाग्रहारं
सुरनिलयसमेतं भूसुराधीनमाधात् ॥ १८ ॥

केलदिजनपदेशस्यास्य पुत्रावभूतां
विरचितवरसंकण्णाभिधानैक्यभाजौ ।
सति च सुतयुगेऽस्मिन् स्वानुजे भद्रभूपे
द्विगुणयुतनिजाख्यां राजतां च न्यधात्सः ॥ १९ ॥

अयमपि नययुक्तः पालयन् सर्वराज्यं
सुकृतचरितमेवावीवृधद्देवभक्तः ।
गजतुरगपदातीन्वर्धयन्सद्यशस्वी
न्यधित च नृपभावं ज्यायसो ज्येष्ठसूनौ ॥ २० ॥

स नरपतिरथैतच्छौर्यसाहाय्यशाली
निजरिपुविरुपण्णाख्यानजम्बूरभूपम् ।
बहुबलमपि जित्वा हर्षवान् सन्निधौ द्राक्
अमुमपि सकुटुम्बः संवसेत्यन्वजानात् ॥ २१ ॥

वसत इह कुटुम्बेनास्य पुत्रावभूतां
प्रथमजनिरसो रामराजेति नाम ।

ह्यधित तदनुजस्य श्रीकरीं वेङ्कटाख्या-
मदित स निजनाम्ने ज्यायसे प्राज्यराज्यम् ॥ २२ ॥

निजमनुजमतन्द्रं विठ्ठलेन्द्रं नरेन्द्रः
तदनु बहलतेजःपूर्णसंकण्णराजम् ।
प्रचुरबलपरञ्ज्यावासगोवां ग्रहीतुं
परिमिलदुरुसैन्यं प्रैषयत्प्रौढमान्यम् ॥ २३ ॥

सपदि जयमवापत्तत्र चैतत्सहायः
स इति सपरितोपोऽदत्त भूयोऽपि राज्यम् ।
निजनगरमवाप्तुं प्रार्थितः प्राहिणोत्तं
स्वजनपदमवन् सन् कीर्तिमानेष रेजे ॥ २४ ॥

अयमथ कृतकृत्यस्तीर्थयात्रां विधित्सुः
सहभुवि सकलोर्वीभारमास्थाय (प्य) काशीम् ।
अगमदिह विधेयान् भूरिधर्मान् विधाप्या-
ध्वनि पुरवरदिल्लीं प्राप शूराग्रगण्यः ॥ २५ ॥

तुरगपतिनगर्या द्वारि केनापि बद्धं
खरतरकरवालं भासयित्वा स्वशौर्यम् ।
परिमितजनवांस्तं प्रेक्ष्य संकण्णभूपः
विमतमदमसोढा द्राग्विमुच्याग्रहीत्तम् ॥ २६ ॥

इदमनुपमवृत्तं पातिशाहो निशम्य
द्रुतमथ बहिरेत्याकार्य तं योधयित्वा ।
स्वयवनमपि तूर्णं नागशाबासिभिन्नो-
दरमहह जयन्तं प्रेक्ष्य तं विस्मितोऽभूत् ॥ २७ ॥

विरुदहरितकेतुं सोऽददात्प्राप्तहर्षो
भुवमपि तदभीष्टां ख्यातपुण्यस्थलेषु ।
सपदि स वितरंस्तां तुङ्गहृज्जङ्गमेभ्यः
स्वपुरमथ यियासुश्चारुमासूरमाप ॥ २८ ॥

तदनु स पुरि तत्र स्वमतो वीरभद्रं
स्वकनगरमनैषीत्तत्तटाकोदरस्थम् ।
व्यधित विधिवदस्य द्राक् प्रतिष्ठां च रामे-
श्वरसविधमगारं बन्धयित्वा विशालम् ॥ २९ ॥

मुनिमहितमघोरेशानमर्चन्विवृद्धं
केलदिजनपदं तं पालयंस्तत्र दीव्यन् ।
कुवलयततकीर्तिर्न्यस्य भारं कनीय-
स्यथ परशिवचासं सैष कैलासमाप ॥ ३० ॥

तदनु विनयधीमान्पुण्यसंकण्णनामा
क्षितिभृदखिलराज्यं पालयामास नीत्या ।
विजयपुरसहायोद्दामसामन्तजेता
सुतमलभत तस्याधत्त सिद्दप्पनाम ॥ ३१ ॥

करमलभत भैरादेविमुख्याहितेभ्यः
स बहुसुकृतसान्द्रे वेंकटेन्द्रे धुरं स्वाम् ।
न्यधित स च विलासी रामराजेन साकं
न्यवसदसमचर्यो धीर इक्केरिपुर्याम् ॥ ३२ ॥

व्यरचयदुरुलीलो नाट्यशालां विशाला-
मपि स बहुतटाकां श्रीमतां तत्र तत्र ।

लसदुपवनराजिं सद्विहारोपयुक्तां
मिलितगुणचिरायुर्वीरभद्राख्यपौत्रः॥ ३३ ॥

क्वचिदशनजनद्यासन्नहोभूरवप्रे
क्षितिभृति सति तस्मिन् तद्विदित्वा कदाचित् ।
हनुमधरणिपालः प्रावृणोत्तं तुरुष्कैः
सह बलितरवीरैः सेनया सानुजन्मा ॥ ३४ ॥

अधिहयमसहायो विक्रमी वेङ्कटेन्द्रो
बहिरभिगत एतं लीलया निर्जिगाय ।
तदनु यवनसेनां धावयामास धीरः
तदनुज उरुराज्यं स्वं ददत्संदधे च ॥ ३५ ॥

अथ हनुममहीन्द्रस्यानुजः स्वाभिभूतिं
स मुहुरसहमानोऽभ्येत्य युध्यन्ननेन ।
परिभवमधिविन्दन् कान्दिशीकोऽभ्यधाव-
च्छरपुरवरणान्तर्लीन आसीदराज्यः ॥ ३६ ॥

बहुरणजितभैरादेव्यनीकस्तदीयं
स्ववशमकृत देशं तौलवं लीलयैवम् ।
खलधियमपि बन्दीकृत्य तां निःसपत्नः
सुचिरमखिलराज्यं वेङ्कटेन्द्रः शशास ॥ ३७ ॥

कमपि च खलचर्यं वेणुपुर्यां कदाचि-
ज्जनपदजनजातोपप्लवानादधानम् ।
बलयुतमथ भङ्क्त्वा कौरवं चारु दुर्गं
स भुवनगिरिनाम्ना चित्रमद्वं व्यधत्त ॥ ३८ ॥

भुवनविदितभृङ्गेर्युज्ज्वलानां मुनीनां
मठमवनिसुराणां चाग्रहारं विधाप्य ।
इह धृतशिवलिङ्गोत्तुङ्गधीजङ्गमाना-
मपि सकलसुराणां मन्दिराण्येव रेजे ॥ ३९ ॥

अथ पुरवर आनन्दाह्वये रङ्गनाथा-
वसथमकृत रम्यं ताण्डवेशालयं च ।
मठमपि वरशैवालम्बनोज्जृम्भिचम्पा-
सर उदितसुसंज्ञं वेङ्कटेन्द्रो विशङ्कः ॥ ४० ॥

स पुनरकृत नाम्ना विश्वनाथस्य विद्वान्
श्रितमुरुतरशास्त्रज्ञाग्रियैरग्रहारम् ।
अपि सुरुचिरवीराम्बापुरे स्वीयनाम्ना
विबुधजनसहायः स व्यधात्सुप्रबन्धान् ॥ ४१ ॥

केलदिपकुलवृत्तान्येवमुक्त्वा समस्ता-
न्यभिनवनरसिंहाख्योऽमुना सन्मुनीन्द्रः ।
प्रचलितुममनस्यद्वाञ्छता वीक्षितुं तं
क्षितिपतिमयमिक्केर्याह्वयां राजधानीम् ॥ ४२ ॥

सह विबुधसमूहैः साधुसामाजिकौघै-
रनुचरजनजातैः स्वस्वसेवाप्रवीणैः ।
अपि बिरुदवृन्दैर्वैन्दिभिर्वन्द्यमानो
यतिपतिरथ हर्षान्निर्ययौ शृङ्गपुर्याः ॥ ४३ ॥

प्रतिपुरमधिवत्सैतं प्रतिग्राममीड्यं
सपदि समुपपूजन् सर्वतः सर्वलोकाः ।

बहुविधफलपुष्पाद्युत्तमोपायनौघै-
र्दिशि दिशि समवेता देशिकेन्द्रं प्रतीक्ष्य ॥ ४४ ॥

नगर उपगतं तं सागराख्ये निशम्या-
खिलबलसहितः प्रत्युज्जगाम क्षितीशः ।
अथ यतिपतिशिष्यै राजकीयैरनेकै-
र्नगरमपि तदाऽभूत्सागराख्यं यथार्थम् ॥ ४५ ॥

तमथ मुनमनयदिक्केर्याख्यपुर्यां सशिष्यं
केलदिपकुलचन्द्रः कीर्तिमान् वेङ्कटेन्द्रः ।
प्रथुतयतिपतिभ्यां पुष्पवद्भ्यां जनानां
कमलकुमुदनेत्राण्यत्र फुल्लान्यभूवन् ॥ ४६ ॥

मुनियुगलमनैषीन्मान्यमात्मीयसौधं
शुकपितृशुकयोगिद्वन्द्ववद्राजमानम् ।
मणिगणरमणीयस्वर्णसिंहासने स्वे
सदसि स उपवेश्य स्वागताद्यन्वयुङ्क्त ॥ ४७ ॥

अवति भवति भूमिं नीतिमार्गेण विद्व-
न्नवनिवर कथं वा भ्रान्तिलेशोऽपि वा नः ।
प्रविलसति दिवि स्यात्पौर्णमासीसुधांशौ
कुवलयनिकराणां किं नु संकोचशङ्का ॥ ४८ ॥

इति मधुरमुदीर्य प्रीतिमान्योगिराजः
प्रणतवरदविद्याशङ्करं चिन्तयित्वा ।
मघवत इव जीवः पुण्यभाजे सुराज्ञे
जनपदपरिवारादीष्टदा आशिषोऽदात् ॥ ४९ ॥

यतिवरसुवितीर्णा आशिषः शीर्ष्णि बिभ्र-
द्विनयविनतभूपः संभ्रमात्संबभाषे ।
शिवमिव सकुमारं त्वां सशिष्यं सुपश्यन्
यतिवर समभूवं सार्थजन्मेति साधु ॥ ५० ॥

अभिनवनरसिंहस्वामिवर्योऽन्वजाना-
त्क्षितिपतिवच एतत्संनिशम्यातिरम्यम् ।
कलितनिखिलशास्त्रे सच्चिदानन्दभार-
त्यभिधविबुधशिष्यं द्रागुपन्यासकृत्यै ॥ ५१ ॥

सपदि स पटुबुद्धिर्योगिराड्युष्मदस्म-
त्पदनिखिलविभक्तिप्रक्रियोपक्रमेण ।
फणिपतिमुखपङ्क्त्युद्यन्महाभाष्यगोप-
न्यसनभरमकार्षीत्पार्षदाश्चर्यदायी ॥ ५२ ॥

व्यरचयदथ वादान् कर्कशे तर्कशास्त्रे
स्फुटमपि स सभायां जैमिनीये नयौघे ।
निगमचरमवाचां श्रीमदाचार्यभाष्या-
धिकरणसुविचारैस्तत्त्वबोधं व्यतानीत् ॥ ५३ ॥

गुरुनिकटनिषण्णछात्रयोगिप्रसङ्गा-
तिशयनिशमनेन क्ष्मापतिर्हर्षमाप्य ।
सह परिषदि सभ्यैस्तुष्टुवे सुष्ठु भूयो
गुरुरपि मुदमस्मात्प्राप सिन्धुर्यथेन्दोः ॥ ५४ ॥

अतुलकनकसूत्रप्रोतकौशेयवासां-
स्यदित नृपतिमौलिः संप्रमोदात्तदाऽऽभ्याम् ।

तमपि समभिनन्द्याशीर्भरैर्योगिराजः
सह नृपजनवर्गैः स्वं मठं प्रत्ययासीत् ॥ ५५ ॥

[1] नृपतिरथ पुरस्थैर्भासुरैर्भूसुरौघैः
स्वयमपि च मनस्वी कारयामास भिक्षाम् ।
तदनु सपरिवारो भूप आगत्य भक्त्या
गुरुमठभवनमग्रश्चन्द्रमौलिं ददर्श ॥ ५६ ॥

गुरुरपि शिवगीताभाष्यमात्मप्रणीतं
विहितबहुविचारं व्यक्तवेदान्तसारम् ।
विबुधनिवहतोषीं श्रावयित्वा मनीषी
शिवमहनधुरीणं हर्षयामास भूपम् ॥ ५७ ॥

अभिनवनरसिंहस्वामिवर्यं सशिष्यं
समधिकबहुमानैः सन्महार्हांशुकाद्यैः ।
अमितवरदमाशीर्वादमादाय मोदा-
दधिकृतनिजलोकैः प्राहिणोत्स्वां पुरीं सः ॥ ५८ ॥

अवनिवरनगर्या योगिराजः सहर्षं
सह कविबुधलोकैः वन्दिभिर्वन्द्यमानैः ।
निरुपमबिरुदालीं धारयन् धीरधुर्यः
पुरि पुरि कृतमानः प्रागमच्छृङ्गपुर्याम् ॥ ५९ ॥

सुगुणगणनिधाने सच्चिदानन्दभार-
त्यभिधमुनिधुरीणे सर्वभारं निधाय ।

१ अयं च श्लोकः मूलमातृकायां न दृश्यते । "मूलाभावः" इति परं तत्र लिखितं वर्तते । किंतु व्याख्यानानुसारेणायं श्लोकः ऊहितः वाचकसौकर्याय ।

यतिपतिरथ विद्याशङ्करं चिन्तयन् सन्
परिचितपरतत्त्वो मोक्षलक्ष्मीं प्रपेदे ॥ ६० ॥

अस्मिन्प्रौढशिरोमणावथ मुदा सामाजिकाः सूरयः
संप्रीतिं सकलाः प्रजाः प्रविदधुस्तत्तद्गुणान्वेत्तरि ।
लग्नेऽमुष्य शुभेऽहनि क्षितिसुरैर्मुक्ताढ्यसिंहासने
संभारैरखिलैर्व्यधायि विधिवत्पट्टाभिषेकोत्सवः ॥ ६१ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यादिबिरुदावलीविराजित श्रीमन्नृसिंहभारती करकमलसंजातसकलविद्याविशारदपंडितपुण्डरीकमण्डलीमार्ताण्ड श्रीसच्चिदानन्दभारतीमुनीन्द्रनिर्मापिते विद्वद्बालकलक्ष्मणशास्त्रिविरचिते श्रीगुरुवंशे महाकाव्ये नवमः सर्गः ॥

---

## ॥ विशेषसूचना ॥

### ( नवमसर्गे )

श्लो० ८–११—

इमे च वृत्तान्ताः शिवरत्नाकराख्ये ग्रन्थे विस्तरेण वर्णिताः ।

श्रीरामेश्वरालयः प्रथमतः दारुणा निर्मापितः । ततः स एव पुनः शिलाभिः निबद्धः ॥

चौडप्पनायकस्य जीवनकालः मार्कि १५००–१५३५ (१५४० ?) A. D.

श्लो० १२—सदाशिवनायकस्य कालः १५४० (?)-१५६५ A D.

श्लो० १४—

विजयापुरी (बिजापूर्) सैन्यं विजित्य सदाशिवनायकः कल्याणदुर्गं स्ववशमकरोत् ॥

श्लो० १६— अलिबरीद् बिदार्राज्याधिपः ॥

श्लो० १७—

भूतलवीरकेरलवर्मनामानं केरलदेशाधिपं जेतुं संप्रवृत्ते केरलयुद्धे सेनाधिपस्य विट्ठलस्य मधुरानायकाः, केलदिनायकाश्च साह्यमकरवन् ॥

तुळुवराज्ये सदाशिवनायकः कासर्कोड्पर्यन्तं सर्वत्र युद्धे विजयमेव प्रापत् । यडवमुरारिनामकस्य जलयपयल्प्रदेशाधिपस्य दुर्गं स्वायत्तीकृत्य सोऽपि अनेन बन्दीकृतः ॥

श्लो० १९— इम्मडि सदाशिवनायकाभिधानः भद्रप्पः १५६६ तमे एकस्मिन्नेव वत्सरे प्रजापालनमकरोत् ।

श्लो० २०—

दोड्डुशङ्कण्णकालः १५६६–१५७१ (A. D.)

श्लो० २३—

अत्र वर्णितं युद्धं गोवास्थान् पोर्तुकीसियान् विजेतुं प्रावर्तत ॥

श्लो० २६—

शिक्कसंकण्णनायककालः १५७१–१५८० । रामराजनायकः अस्य सहायनृपः अभवत् । १५८५ तमे वर्षे अयं अम्रियत ॥

श्लो० २९— वीरभद्रालयः रामेश्वरमन्दिरसमीपे वर्तते ॥

श्लो० ३०—

इक्केरीवर्तमानः अघोरेश्वरालयः नितरां रमणीयः । अस्मिंश्च आलये संकण्णस्य प्रतिमा संस्थापिता वर्तते ॥

श्लो० ३२—

भैरादेवी गर्सोप्पाप्रदेशस्य राज्ञी। वेङ्कटप्पनायककालः १५८६-१६२९ (A.D.)

श्लो० ३३—

पीट्रो डेल्ला वल्ले नामकः इतलीदेशादागतः यान्त्रिकः अस्मिन् राज्ये कंचित् कालं न्यवसत्। अत्र विद्यमानान् आलय-तटाक-नाट्यशालादीन् अधिकृत्य अनेन सम्यक् अनुवर्णितम् ॥

श्लो० ३४-३५—

हनुमानाख्यः अयं विजयापुरी सेनाधिपति मुञ्जुलाखाँ साहाय्येन आक्रामतिस्म। तदा वेङ्कटप्पस्तानजयत् ॥

श्लो० ३६—

इदं च शरपुरं इदानीं बानवरं (बाणपुरा) इत्युच्यते ॥

श्लो० ३७—

भैरादेव्या साकं १६०६ वत्सरे इदं युद्धं संजातम् ॥

श्लो० ४१— विश्वनाथपुराग्रहारः वरदानदीतीरे वर्तते ॥

---

## NOTES

**VV 8 to 11.** These incidents are narrated in the *Śivatattvaratnākaram*.

The Rāmēśvara temple which was originally built of wood was later converted into a stone temple.

Chauḍappa Nāyaka A. D. 1500—1535 (1540 ?)

**V 12.** Sadāśiva Nāyaka 1540 (?)—1565.

**V 14.** Sadāśiva captured the fort of Kalyāṇī in an encounter with the Bijāpur army.

V 16. Ali Barīd was sultan of Bidār.

V 17. The Kerala campaign was against Bhūtala Vīra Kēraḷā Varma of Travancore and was led by Viṭṭhala with the assistance of the Madurai and Kelady Nāyaks.

In the campaign in the Tulu country Sadāsiva marched as far as Kāsargode. Yāḍava Murāri was the chief of Jalayapayal. Sadāsiva captured his fort and took him prisoner.

V 19. Bhadrappa or Immaḍi Sadāśiva Nāyaka reigned for only one year 1566.

V 20. Doḍḍa Śaṅkaṇṇa 1566—71.

V 23. The expedition mentioned here was against the Portuguese of Goa.

V 26. Chikka Śaṅkaṇṇa Nāyaka 1571—80.

Rāma Rāja Nāyaka, who was joint ruler with him,died in 1585.

V 29. Vīrabhadra temple is adjacent to Rāmēśvara temple.

V 30. Aghorēśvara temple is a fine structure in Ikkēri. There is a portrait sculpture of Śaṅkaṇṇa within this temple.

V 32. Bhairādēvī was ruler of Gersoppa.

Vēnkaṭappa Nāyaka 1586—1629.

V 33. The Italian traveller Pietro Della Valle, who visited the kingdom has left an interesting account of the hall of Dancing, temples and ponds.

VV 34—35. Vēṅkaṭappa defeated Hanūman who was assisted by the Bijāpūr general Munjula Khān.

V 36. Ṣarapura is modern Bānavara.

V 37. Bhairā dēvi was defeated in battle in 1606.

V 41. Visvanāthapura agrahāra is on the Varadā river.

## दशमः सर्गः ॥

शृङ्गपुरसिंहपीठे मृगराज इवाद्रिशृङ्ग उरुतेजाः ।
गुरुराजो विरराजाथ सच्चिदानन्दभारती सोऽयम् ॥ १ ॥

चरितैर्गुणगणभरितैः सकलान्सामाजिकान्प्रजा निखिलाः ।
अनुगानपि च दयालुर्वशीकरोति स्म सैष हृदयालुः ॥ २ ॥

शिखराणि संगृहीतान्यभिनवनरसिंहभारतीगुरुणा ।
आरोप्याभूत्स कृती श्रीविद्याशङ्करेशसद्माग्रे ॥ ३ ॥

शिव इव धनपतिनगरीं भुवनगुरुर्गन्तुमिक्केरीम् ।
अमनस्यत्स मनस्वी कृपालुराशीभरोचितनृपाले ॥ ४ ॥

भद्रगजैश्च तुरङ्गैर्विबुधैः (सह) प्रजापरीवारैः ।
द्युपुरादिव सुरनाथो भूसुरनाथो निजात्पुरान्निरगात् ॥ ५ ॥

पथि पथि जनसंभाव्यः पुरे पुरे पूजितोऽधिकारिवरैः ।
शक्र इव देवनगरीमिक्केरीं प्राप संभ्रमात्सोऽयम् ॥ ६ ॥

दूरं नृपोऽपि सचिवान् प्रेष्य स्वयमपि यथार्हमभिगम्य ।
प्रावेशयदथ भक्त्या कोविदतिलको मुनीन्द्रमपि सौधम् ॥

आदायाशिषमस्मान्मोदात्प्रविधाय भूरिसन्मानान् ।
प्राग्विदितैतद्धियो विद्वांस्तं प्राहिणोन्मठं मृदुवाक् ॥ ८ ॥

स्वयमपि मठं तदैत्य प्रादाद्वसनानि सन्महार्हाणि ।
वरभाषणपरितोषी मोक्तुं नैनं मनोऽकरोन्नृनम् ॥ ९ ॥

मूकाम्बेक्षणमिषवान् लोकगुरुं मुनिपतिं तदाऽनैषीत् ।
श्रीकोल्लूरुपुरीं भूलोकेशः सरलमानसं कुशलः ॥ १० ॥

ऐक्षेतां मूकाम्बां दक्षां संरक्षणे सदा भजताम् ।
प्रेक्षावन्तावेतौ तत्क्षणमेव स्तुतीरथाकुरुताम् ॥ ११ ॥

संपूज्य तौ प्रसादं संप्राप्य भृशं प्रमोदसंपन्नौ ।
संपूर्णसैन्यविभवौ स्वं स्वं स्थानं प्रभू प्रपेदाते ॥ १२ ॥

नृपतीन्द्रपरामृष्टः श्रेष्ठो हृष्टो मुनीन्द्र एष चिरम् ।
पुरि तस्यां समवात्सीदम्बानिकटे ससंभ्रमं सतपाः ॥ १३ ॥

मठमागतं महीन्द्रं सन्मानैर्हर्षयन्तमात्मानम् ।
स्वनगरमेतुं समनुज्ञाय मुनीन्द्रः स्वयं ततो निरगात् ॥ १४ ॥

भृङ्गपुरीं स्वामगमन्मुनिपुङ्गव एष मानितो मार्गे ।
जन्म निजममलयद्भिर्जानपदैस्तत्र तत्र तत्रभवान् ॥ १५ ॥

मूकाम्बिकासमीपाद्भूकान्तो वेङ्कटेन्द्र आगत्य ।
परमतविवादविजयी रेजे विरुदं तत अप्य इक्केर्याम् ॥ १६ ॥

श्रीवीरभद्रभूपे राज्यधुरं न्यस्य सद्गुणप्राज्ये ।
श्रीवेङ्कटक्षमेन्द्रः शैवं लेभे पदं बुधैर्विनुतः ॥ १७ ॥

तेन पुराऽऽक्रान्तधरो भैरवभूपः क्वचिद्वसन् कोणे ।
सबलः समेत्य सालान्प्रबलः समये जवेन जग्राह ॥ १८ ॥

षड्योजनानि राज्यं भैरवभूपस्य संगृहीतवतः ।
अन्तर्भूताऽभवदियं भृङ्गपुरी तापसेन्द्रसंरक्ष्या ॥ १९ ॥

प्रैषयदधिकारिवरान् भैरवभूपो यतीश्वरासन्नम् ।
तदुपितकलशनगर्यामेष ययौ किल मितैर्जनैर्धीरः ॥ २० ॥

सेनापतिरभियातः सेनासहितो निनाय मुनिराजम् ।
नगरीं नृपालविनुतं विरोधिराजैरपि प्रशस्यतमम् ॥ २१ ॥

विहिताह्निकः प्रहर्षात्स तुङ्गभद्रातटोपकार्यायाम् ।
अभिगत्य गृहं नीतः क्षितिपतयेऽदात्तदाऽऽशिषो यतिराट् ॥

अन्तर्द्रव्यजिघृक्षुस्त्वदर्शयन्नमनकैतवाद्वीरान् ।
भूरिविकोशासिधरान्भैरवराडपि च सैष नाभैषीत् ॥ २३ ॥

पार्षदहर्षदवृत्तः प्रसन्नवक्त्रः प्रसङ्गमाधत्त ।
तस्मात्स विस्मितोऽभूद्दृष्ट्वैतद्धृष्टतां विभाय हृदि ॥ २४ ॥

हृष्टेन सह च तेन श्रीकलशेशं विलोक्य विलसन्तम् ।
संप्रेष्य कंप्रभूपं वन्दिभिरायात्स वन्द्य उपकार्याम् ॥ २५ ॥

गव्युतिमितां नगरात् भव्यां प्रजगाम सोमवाहीं सः ।
पुनरायान्मितजनवान्विधाय किंचाह्निकान्यनह्वाय ॥ २६ ॥

दातुं न शिथिलहृदसौ स्वस्मै धनमित्यतीव निश्चित्य ।
सन्मानांशुकदानात्संतोष्य प्राहिणोद्भूपः ॥ २७ ॥

कथमपि कथितः पिशुनैः शृङ्गपुरासन्नमागमत्स ततः ।
अर्थातुर इति भीताः पौरा धनिनः पुरान्तरं जग्मुः ॥ २८ ॥

यतिराजेऽननुमतिमति कमपि दुरात्माऽधिकारिणं वशयन् ।
विषमिव धनं समादाद्धानिनि मूलं पराभवे स्वस्य ॥ २९ ॥

स्वीकर्तुमखिलनगरं सालं निर्माय नायकीभवितुम् ।
आगाद्यतिपतिनिकटं तपसो भीतस्तथैव पुनरगमत् ॥ ३० ॥

भैरवराट्कारकले पुर उषितो वीरभद्रभूपभटैः ।
वीरैरभिभूतोऽभून्महात्मखेदान्न किं भवेदहितम् ॥ ३१ ॥

स्वामिन्यागो विहितं श्रम आपि मया पुनस्तदीयदयाम् ।
लब्ध्वेष्टवान्भवेयं ध्रुवमिति मतिमान्स आस्त कारकले ॥

श्रीवीरभद्रभूपो मुनिमीक्षितुमाप तीर्थराजपुरम् ।
स्वपुरेऽस्य भ्रातृव्यः पूर्वैर्बन्दीकृतस्तदा निरगात् ॥ ३३ ॥

वशयन् सर्वान् भेदात् द्विभागराज्यं स वीर आक्रामत् ।
आनन्दपुरनिवासी स वीरभद्रः शशास भुवमल्पाम् ॥ ३४ ॥

प्रैषयदाशीःपत्रं सैष यतीन्द्रस्तपस्विमूर्धन्यः ।
तस्य हि निजसंपदाप्त्यै महतां हि दया हितार्थदा समये ॥

अकृतोपप्लवमस्य स भैरवभूपोऽथ दुरधिकारिमुखात् ।
अर्थं ग्रहीतुकामः परत्र रोषान्मुनिर्ययौ तपसे ॥ ३६ ॥

केलदीशप्रहितसुधीप्रार्थित आगात्पुरं स यतिराजः ।
मतिमानेष महात्मा सर्वान्निरुपद्रवांस्ततो विदधे ॥ ३७ ॥

अभिमतनृपराज्याप्त्यै तपो व्यधात्तापसोत्तमस्तत्र ।
श्रीवीरभद्रनृपतेराशीर्लिखितं तदा प्रहितवांश्च ॥ ३८ ॥

रिपुभङ्गविवृद्धश्रीः स वीरभद्रोऽखिलां भुवं लेभे ।
निशमितमारुतरामायणो यतीन्द्रस्य पुर्युवास सुखम् ॥ ३९ ॥

काव्यं च रामचन्द्रमहोदयनाम व्यधान्मुदे विदुषाम् ।
सुगुणालङ्कारगणं सूरिनुतं भुवनगुरुरयं धीरः ॥ ४० ॥

अथ वीरभद्रभैरवसुरयोरिव वीरभद्रभैरवयोः ।
राज्ञोर्युद्धं समभूल्लेभेऽभिभवं स भैरवः खलधीः ॥ ४१ ॥

अपि चाकारयदेतं कृतशंको यतिपतिं तदा धीरम् ।
कृतबहुमहाप्रसङ्गं गृह्णन्नभयं तमापिपत्स्वपुरम् ॥ ४२ ॥

वेलासमुचितवेलापुरपं शरणं गतः स खलः ।
तेन च कृतसाहाय्योऽप्युपप्लवानेव मुनेः शुचे चक्रे ॥ ४३ ॥

श्रुत्वा वृत्तं नृपतिर्बलं बहु प्राहिणोन्मुनेर्निकटम् ।
गतसर्वस्वो व्यलसत्प्रतिपच्चन्द्रोपमो मठे यतिराट् ॥ ४४ ॥

स्वप्नेऽपश्यत्स महान् दण्डधरां सुन्दरीं कवाटस्थाम् ।
रक्षाम्येतं मठमहमिति वाचं मन्दहासमुदितवतीम् ॥ ४५ ॥

स उचितमालोच्य तदा परतो गन्ता चिरादुवास ततः ।
स च वीरभद्रबलपो विनिवर्त्य बलं नमन् ददर्श मुनिम् ॥

सान्त्वयिता समनैषीन्मठं स्वकं (स) मृदुगिरा मुनिपम् ।
मठमनु नवनीतगिरौ विरचय्य सालं बलं न्यवेशयत ॥ ४७ ॥

करितुरगपदगपूर्णा भृङ्गपुरी साऽमरावतीवाभात् ।
आसेचनकयतीन्द्रं ते सैन्या आलुलोकिरेऽनुदिनम् ॥ ४८ ॥

श्रीवीरभद्रभूपः स्वत आगादुपदिशं दिदृक्षुरमुम् ।
भृङ्गपुरेऽखिलदेवानवलोक्य मठमेत्य शारदामभजत् ॥ ४९ ॥

आशिषमादाय नृपो यतिराजमवोचदस्मदैश्वर्यम् ।
भवदीयतपोमहिमातिशयान्मामनुगृहाणेति ॥ ५० ॥

गदितो मुनिस्तमूचे भवानपि प्रेमवान्परामृशतु ।
अस्मानिति मृदुवाचं मुदोपकार्यां ययौ स तन्मान्यः ॥ ५१ ॥

समनुज्ञातो मुनिना सेनां संरक्षितुं मठं स्वीयम् ।
स्थापितवान्प्राप्ताशीर्निजं पुरं स जयवान्मुदापेदे ॥ ५२ ॥

श्रुत्वा भैरवभूपो वृत्तमिदं प्रैषयत्स रोषयुतः ।
सेनेशं बहुसेनं न्यरुणन्नगरं स दुर्मतिः सुचिरम् ॥ ५३ ॥

अवलोक्य तदीयबलं परतोऽपससार स सरितस्तीरे ।
बहु धनमाददस्माद्भेदाच्छ्रीवीरभद्रबलपोऽयम् ॥ ५४ ॥

भैरवबलपतिराशान्नगरीं पौराश्च भीरवो धीरम् ।
यतिराजं शरणमयुर्गभीरतां स्वामभासयत्सतपाः ॥ ५५ ॥

महतो बहुतरतपसा वहतां ममतां सुदेवतानां च ।
अस्त्रैः स्वैर्निर्मुक्तैः प्रत्यस्त्रैर्वारितैरभूत्स्वास्थ्यम् ॥ ५६ ॥

तत्र विचित्रं हनुमत्प्रमुखा देवा यतीशितुः स्वप्ने ।
अस्त्राग्निशिखाग्लानं हस्ततलादिकमदर्शयन्ताङ्गम् ॥ ५७ ॥

भैरवकालीदुर्गा भैरवसेनां पलाययामासुः ।
सकलमभीष्टं पूर्णं क्षिप्रमहो देवताप्रसादबलात् ॥ ५८ ॥

प्रशशंसुरखिललोका भृशशान्तं धैर्यवन्तमनिशं तम् ।
(ह)हृतदशकण्ठं दशरथसुतमिव मुनयोऽतिविस्मयेन तदा ॥

गुरुशतकं मीनाक्षीशतकं च विधाय कोविदष्टीकाम् ।
हरपुरविबुधविशेषप्रकरेणाचीकरन्मनीषितुताम् ॥ ६० ॥

जाग्रन्नित्योत्साहो द्राग्राज्ये पूगनिष्कुटान् पूर्णान् ।
लालनवाञ्छाधुर्यात्पालितसकलप्रजो व्यवीवृधत ॥ ६१ ॥

अपि तत्र तत्र सेतूनबन्धयद्धर्मसिन्धुरेष मुनिः ।
संततपरमानन्दः सच्चिदानन्दसार्वभौमेन्द्रः ॥ ६२ ॥

कीर्तेः पूर्तिं सच्चिदानन्दयोगी
नित्यं नित्यं कारयामास धर्मैः ।
भक्तेष्टश्रीसारदां शारदाम्बां
हर्षोत्कर्षं प्रापयामास विज्ञः ॥ ६३ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यादिबिरुदावलीविराजित श्रीमन्नृसिंहभारती करकमलसंजातसकलविद्याविशारदपंडितपुण्डरीकमण्डलीमार्ताण्ड श्रीसच्चिदानन्दभारतीमुनीन्द्रनिर्मापिते विद्वद्बालकलक्ष्मणशास्त्रिविरचिते श्रीगुरुवंशे महाकाव्ये दशमः सर्गः ॥

---

## ॥ विशेषसूचना ॥

### (दशमसर्गे)

श्लो० १६—

मध्वमतानुयायिभिः विद्याधीशभट्टादिपण्डितैः साकं श्रीकाशीरङ्गोजिभट्टस्य संप्रवृत्तः शास्त्रविवादः अत्रानुवर्णितः । अत्र च नृसिंहाश्रमी मध्यस्थः अभवत् । विवादावसाने वेङ्कटप्पनायकाय 'विशुद्धवैदिकाद्वैतसिद्धान्तप्रतिष्ठापकः' इति बिरुदं पण्डितसमूहेन प्रदत्तम् ॥

नृपोऽयं शृङ्गगिरौ श्रीजगद्गुरुनिवासाय नूतनं मठं निर्मापितवान् । बहूनग्रहारांश्च ब्राह्मणेभ्यः प्रददौ ॥

श्लो० १७— वीरभद्रनायकस्य कालः १६२९–१६४५ A. D.

श्लो० १८–१९

पूर्वं वेङ्कटप्पनायकेन युद्धे पराजिताः राजानः संगत्य कलहमकुर्वन् । तेषु एकः कलशराज्याधिपः । अयं च इक्केरीराज्यान्तर्गतां षड्योजनविस्तीर्णां भुवं स्वायत्तीचकार । शृङ्गाद्रिरपि अत्र अन्तर्गत आसीत् ॥

श्लो० ३३–३४—इक्केरीराज्याधिकारेप्सुषु वीरप्पनायकोऽपि एकः । अयं च वेङ्कटप्पनायकेन कारागृहे बन्दीकृतः । १६३० तमे वत्सरे कारागृहात् बहिर्निर्गत्य इक्केरीराज्ये बहून् प्रदेशान् स्ववशानकरोत् । मार्कि १६३२ तमे संवत्सरे अयं मरणमापत् ॥

श्लो. ४० — श्रीरामचन्द्रमहोदयकाव्यस्य मातृका इदानीमपि शृङ्गेरी श्रीमठीयकोशे वर्तते ।

श्लो० ४३ — वेलापुरं–इदमेवेदानीं 'बेलूर' इति व्यवह्रियते । इदं च तुळुवदेशे कार्कलाविभागे वर्तते ॥

श्लो० ६०— श्रीमीनाक्षीशतकस्थाः बहवः श्लोकाः 'श्रीशङ्करकृपा' द्राविडमासिकपत्रिकायां द्राविडानुवादेन सह प्रकाशिताः ॥

## NOTES

V 16. This polemical contest was between Raṅgōji Paṇḍita of *Kāśi* and Madhva scholars headed by Vidyādīśa Bhaṭṭa. The Advaitic scholar Narasimha Asrama was the observer.

Vēṅkaṭappa received the title of *Viśuddha Vaidikādvaita Siddhānta Pratishṭhāpaka*.

He built a matha at Sringeri for the residence of the Guru and presented agrahārams to Brahmins.

V 17. Vīrabhadra Nāyaka. 1629—45.

VV 18-19. All the chiefs whom Veṅkaṭappa had previously subdued rose in rebellion against Vīrabhadra. Bhairava of Kalaśa was one of them. He brought under control six yojanas of territory belonging to Ikkeri and Sringēri was included in it.

VV 33-34. Vīrappa Nāyaka was a claimant to the throne. Veṅkaṭappa had put him in prison, but he escaped in 1630 and took possession of a considerable part of the kingdom. He died about 1633.

V 40. *Rāmachandramahodaya Kāvya* the manuscript is in the library of the Sringeri Math.

V 43. This Vēlāpurā is, Belūr in the Kārkala Taluk.

V 60. Selections from the *Mīnākshi Śatakaṃ* have appeared in the *Śri Śankara Kripa* (Tamil).

---

## एकादशः सर्गः ॥

---

सच्चिदानन्दयोगीश्वरो भास्वरो
नित्यमानन्दयन् संनिधौ संनतान् ।
संदिदृक्षुः शिवक्ष्मापतिं संभ्रमा-
द्वन्दितो वन्दिभिर्निर्ययौ स्वात्पुरात् ॥ १ ॥

राज्यलब्धेः पुराऽनादृतः स त्वया
सद्गुरो किं नु वौदास्यमाधास्यति ।
तत्पुरे गन्तुमाधीयतां न त्वरे-
त्यर्थितः स्वैर्विलम्बं व्यधाद्वर्त्मनि ॥ २ ॥

सोऽपि चक्रे तदौदास्यमेवामनाः
सैष कालोचितं धैर्यमेवावहत् ।
तत्पुरद्वार्ययं निर्निरोधीभव-
न्नन्तरागात्पुरे भूरिवाद्यैर्युतः ॥ ३ ॥

सन्महाशङ्खमाध्मायता सर्वतः
शांखिकौघेन सद्वन्दिभिः संस्तुतः ।
गीयमानाधिकोद्यद्गुणो गायकै-
स्तत्र पौरैस्तदा चित्रमालोक्यसौ ॥ ४ ॥

शंसितश्रीलसद्वंशपुर्यन्तरा
राजसौधाग्रतस्तापसेशो निजाम् ।
चालयन्न क्षिप्रमान्दोलिकां सर्वत-
श्चालनव्योऽगमन्नीलकण्ठालयम् ॥ ५ ॥

सोऽपि च श्रीशिवक्ष्मेश्वरो विस्मया-
न्निस्तुलं शङ्खनादं समाकर्णयन् ।
एतदीयागमोदन्तवित्सत्वरं
प्राप देवालयेप्यन्तिकं सद्यतेः ॥ ६ ॥

एतदीयैस्तपःश्रीबलैर्मोहितः
सद्विनीतो भवन् प्रार्थयन्पार्थिवः ।
सौधमायाहि मे शाधि मां वोधनै-
रित्यनैषीन्मुनीन्द्रं निजं मन्दिरम् ॥ ७ ॥

त्यक्तरोषो महान्न प्राप्ततोषो मुनि-
स्तत्समीपे निषण्णो यथार्हासने ।
प्रापयद्विस्मयं तत्र सर्वां सभां
श्राव्यमाणादतीव प्रसङ्गोच्छ्रयात् ॥ ८ ॥

एतदीयैर्मृगेन्द्रोपमैर्गर्जितैः
राजसिह्मोऽपि चिलीयमाणो हृदि ।
मन्यमानः स्वमर्हं तदीयाशिषां
मञ्जुभाषी यथार्हं तमाह्लादयत् ॥ ९ ॥

तेन दत्तं च सन्मानवस्त्रादिकं
सानुकम्पं समादाय चाशीःप्रदः ।
प्रेषितैर्मन्त्रिभिः सैनिकैः सानुगो
मौनिराट्संप्रपेदे मठं स स्वकम् ॥ १० ॥

राजमानो महाराजभिक्षादिकं
सर्वमप्यभ्युपैर्निर्वृतः सोऽन्वहम् ।

पौरचेतोहरः सर्वलोकैर्नुतो
वंशपुर्यां बभौ वासरान् कानपि ॥ ११ ॥

पूर्वभूपालरीतिं स्वयं चाचरन्
मान्यकारुण्यपूराभिलाषी नृपः ।
मन्त्रिभिः संवृतः सर्वसेनावृतः
संभ्रमेणाथ रम्यं मठं प्राप सः ॥ १२ ॥

मौनिराजाय सन्मानवासोऽददा-
त्तेन दत्तं तदाशासनाद्याददत् ।
स्वं परामर्शयन् संपदं पालये-
त्युक्तमार्येण तन्मस्तकेऽधारयत् ॥ १३ ॥

योगिराडागमच्छृङ्गपुर्यां ततः
स्वं च राज्यं शशास प्रसन्नाशयः ।
भासिता देवतास्तत्र सूपासिता
मङ्गलश्रीरभात्तुङ्गभद्रातटे ॥ १४ ॥

ऋश्यशृङ्गार्यतातेन संपूजितं
रौद्रलिङ्गं महाशान्तिमासञ्जयत् ।
वामतोऽस्य प्रियायाः प्रतिष्ठापने
चित्तमाधत्त मौनी महोत्साहवान् ॥ १५ ॥

शिल्पिवर्याननल्पान्समाकारय-
न्प्रीणयन्भूरिवित्तं स विश्राणयन् ।
आलयं लीलयाऽकल्पयद्भिस्तृतं
द्वारपालादिभिश्चित्रितं सर्वतः ॥ १६ ॥

दृष्टिमद्दुर्षदां दार्षदीमाकृतिं
कारयन्कर्णनासादिभूषाधृतौ ।
सूक्ष्मरन्ध्राणि चित्राणि चाधापयन्
संप्रतिष्ठापने भूय आस्थामधात् ॥ १७ ॥

दिव्यमूर्तिश्रियो भव्यभूषाद्युतेः
सुप्रतिष्ठोत्सवं सन्मुहूर्ते ततः ।
तान्त्रिकाद्यैर्यथातन्त्रमाधापय-
त्तां भवान्यम्बिकेत्येष नामापयत् ॥ १८ ॥

भोजयामास भूमीसुरान्भूयस-
स्तोषयामास तान् दक्षिणाद्यर्पणैः ।
भासयामास तामुत्सवैरेष उ-
ल्लासयामास तस्या मनोवल्लभम् ॥ १९ ॥

प्रेषितैर्मन्त्रिभिः प्रार्थितेऽथान्यदा
श्रीशिवक्ष्मापतिं वीक्षितुं कोविदम् ।
तापसेन्द्रे गते वंशपुर्यां पुनः
सर्वसन्माननं पूर्ववच्चाविभूत् ॥ २० ॥

रामचन्द्राख्यमौन्युत्तमच्छात्रस-
न्नारसिंह्माख्ययोगीशशिष्योऽपरः ।
दूरमुत्सारितः सद्गुरुद्रोहतः
संगमक्षेत्रमध्यास्त राजेरितः ॥ २१ ॥

यातिं लोकान्तरं तत्र तस्मिन्यतौ
सर्वमेतत्समग्रं च भूम्यादिकम् ।

सच्चिदानन्दमौनीश्वरायत्तमे-
वाकरोद्भूपतिर्युक्तकृत्संततम् ॥ २२ ॥

अभ्युपेत्यैष तद्भाषितं भूपतेः
साधयन् संगमक्षेत्रमागान्मुनिः ।
आत्मनिघ्नीकृतैतन्मठे यत्स्थितं
सर्वमप्याददे वृत्तिवित्तादि तत् ॥ २३ ॥

किं च साहस्रलिङ्गाञ्चितक्षेत्रगो-
ऽकारयच्चारुदेवालयं लीलया ।
संप्रतिष्ठां द्रुतं पूर्णभक्तिर्व्यधा-
त्तत्र रामेश्वराख्यानलिङ्गस्य सः ॥ २४ ॥

सैष तत्रत्यसालाधिपेनादृतः
सर्वशिष्याञ्चितः स्वां पुरीमाययौ ।
तापसैः सर्वमप्राप्यमप्याप्यते
किं विचित्रं स्वकं स्वे वशेऽभूदिति ॥ २५ ॥

सर्वमाधित्सितं साधु निर्वर्तयन्
भूतले कीर्तिमान् भूतिदो धीमताम् ।
संततं सर्ववेदान्तवैज्ञानिको
राजभिः पूजितो भूरिकालं बभौ ॥ २६ ॥

अत्र लोके नुतश्चित्रसाम्राज्यवान्
छात्रमन्वग्रहीत्पात्रमेतच्छ्रियः ।
सच्चिदानन्दयोगी नृसिंहाह्वयं
एकमभ्यस्ततो मुक्तिराज्यं ययौ ॥ २७ ॥

सर्वशास्त्राणि च प्रेक्षयाऽभ्यस्तवा-
न्सर्वदा सुप्रसङ्गं विधाता बुधैः ।
कारयन् पूर्ववत्सर्वधर्मान्मठे
श्रीनृसिंहाख्ययोगीश आसीच्चिरम् ॥ २८ ॥

सच्चिदानन्दभारत्यभिख्यावतः
सद्गुरोः प्रीतये चारुदेवालयम् ।
बन्धयन् सोऽत्र लिङ्गप्रतिष्ठां व्यधा-
त्सच्चिदानन्दनाम्नेश्वरं ख्यापयन् ॥ २९ ॥

शारदाम्बोत्सवार्हां स मूर्तिं तथा
श्रीकरोऽचीकरत्स्वीकृतोद्धारकः ।
स्वर्णरत्नोज्ज्वलैर्भूषणैर्भूषितां
पूर्णकीर्तिस्फुरद्वैभवोऽशोभत ॥ ३० ॥

सच्चिदानन्दनाम्नाऽग्रहारं ततः
संविधाप्य द्विजाग्र्यव्रजायार्पयन् ।
सच्चिदानन्दनाम्नैष शैवालयं
बन्धयंस्तत्र लिङ्गप्रतिष्ठां व्यधात् ॥ ३१ ॥

सैष कालोपयुक्तेषु कार्येषु सन्
जागरूकः सदा योगिराजो महान् ।
सन्नुतां चन्नमाम्बां महीनायिकां
संदिदृक्षुस्ततो वंशपुर्यामगात् ॥ ३२ ॥

तत्र मन्त्रीश्वरैः संततं भास्वरै-
र्भूरिभिर्भूसुरैः पौरनेत्रातिथिः ।

सर्वसामाजिकैर्भ्राजितोऽस्या मुदा
साधुसन्मानितः स व्यधाद्दर्शनम् ॥ ३३ ॥

आगतः श्रीमठं सर्ववाद्यैर्युतो
वन्दितो वन्दिभिर्नन्दितो नागरैः ।
अग्रहीन्निग्रहानुग्रहेष्वग्र्यधीः
सर्वतोऽयं सपर्याविधाः कोविदः ॥ ३४ ॥

सा महाराज्ञ्यपि श्रीमठेऽत्रागता
सैनिकैर्मन्त्रिविद्वज्जनैः संगता ।
नूनमेतं च सन्मानयन्त्याशिषः
प्राप संतोषतस्तापसार्यादतः ॥ ३५ ॥

योगिराजोऽप्यसौ निर्गतस्तत्पुरा-
च्छत्रसच्चामराद्यैर्भृशं शोभितः ।
दर्शनात्पावयन्पार्श्वमेत्यानता-
न्धीमदासेवितं श्रीमठं प्रागमत् ॥ ३६ ॥

कुत्स्यदुर्भिक्षवृद्ध्या क्षये वत्सरे
बाधितान्सर्वदेशागतान्मानवान् ।
लक्षसंख्यातिगानन्नदानोत्सवै-
रन्वहं चामृशत्सानुकम्पो मुनिः ॥ ३७ ॥

तत्सुतोर्वीपतेश्चैवमेवान्यदा
सर्वविद्यान्विताद्धंशपुर्यां गतः ।
सर्वमप्याप सन्माननं पूर्वव-
त्सच्चिदानन्दयोगीन्द्रहस्ताब्जभूः ॥ ३८ ॥

किंकराभीष्टकृच्छंकरेशालयं
संविभान्तं महान्तं नितान्तं कृती ।
सत्सुधालेपनान्तैर्विधेयैः कृतै-
र्जीर्णतां त्याजयन् पूर्णकीर्तिर्बभौ ॥ ३९ ॥

नेत्रसंप्रीतिदं चित्रमालेखय-
च्छारदामण्टपे सर्वतो भित्तिषु ।
चित्रकक्ष्यालसद्भित्तिभागेऽभिधां
चित्रमालेख्य सार्थामकार्षीत्तमाम् ॥ ४० ॥

पूर्णभक्तिः स गोकर्णयात्रां वरां
सर्वसभ्यैर्वृतस्तत्र तत्रार्चितः ।
वन्दिनामुच्चकैर्वन्दनीयोऽनिशं
पावयन्वीक्षितान्भावनीयोऽकरोत् ॥ ४१ ॥

शम्भुकान्तां च मूकाम्बिकां संभ्रमा-
च्चारुकोल्लूरुवासां समालोकत ।
सन्नमन् संस्तुवन् पूजनं कारयन्
धीर योगीन्द्र आशंसितान्याप सः ॥ ४२ ॥

भास्वरं प्राप्य कोटीश्वरं प्रस्तुव-
न्सागरे स्नानकृद्योगिराजो व्यभात् ।
ग्रामवृन्दं स्वकं मार्गगं चामृश-
न्भृङ्गपुर्यां सुधीपुङ्गवोऽभ्यागमत् ॥ ४३ ॥

भूरिकालं लसन्धर्मशीलो वस-
न्श्रीनृसिंहाभिधो मौनिराजस्ततः ।

सच्चिदानन्दभारत्यभिख्यां दद-
　ञ्चितत्कृद्बुद्धिमच्छात्रमन्त्रग्रहीत् ॥ ४४ ॥

सर्वथा सर्वदा सर्ववेदान्तगा-
　र्थानुसंधानशान्मौनिराजानतः ।
निर्व्यथं निर्गुणब्रह्मलीनो भव-
　न्निर्वृतिं निस्तुलां तापसः प्राप सः ॥ ४५ ॥

तारकाराजसंख्ये प्रयाते शके
　शालिवाहस्य संवत्सरे पार्थिवे ।
फाल्गुने कृष्णपक्षे तृतीयातिथौ
　साऽत्रभूदस्य पट्टाभिषेकोत्सवः ॥ ४६ ॥

केलदीपालसंप्रीतिसंप्रेषिता-
　नूनसन्मानवासो गृहीत्वाऽऽगतैः ।
मन्त्रिवर्यैश्च देशान्तरादागतै-
　र्भूरिभिः सूरिभिश्चाविभूदुत्सवः ॥ ४७ ॥

स्वाभिवर्धी तदा सैष एवौषधीट्
　मौक्तिकर्क्षैर्युतश्चोपबर्हादिगैः ।
इत्युपालोच्य सामुद्रतोयं स्वयं
　तं समाश्लिष्यतीवेति विज्ञा विदुः ॥ ४८ ॥

भूरिमुक्ताघने चारुसिंहासने
　सच्चिदानन्दयोगीन्द्र उद्यन्नभात् ।
भूमिदेवैः सभायां सुधर्मान्तरे
　देवतेशो यथैवावृतो दैवतैः ॥ ४९ ॥

अग्रतोऽमुष्य सच्छिष्यसंघार्पितः
सत्करद्रव्यराशिर्विरेजे महान् ।
देवशैलो दधल्लाघवं प्रार्थय-
न्नैव देयस्त्वयैकोऽहमित्युहितः ॥ ५० ॥

पञ्चभक्षोल्लसत्पायसाद्यैरथ
ब्राह्मणा भोजनं चक्रिरे श्रीमठे ।
ते सुधैकाशनाः किंतु सर्वे सुराः
भोक्तुमभ्यागता नैकधेत्यूहिताः ॥ ५१ ॥

मस्तके मौक्तिकोष्णीषसंभूषितः
सान्द्रसौवर्णरुक्चन्द्रिकाचेलधृक् ।
संचलन्स्वर्णरत्नस्फुरत्पादुका-
पादपद्मः समारोहदान्दोलिकाम् ॥ ५२ ॥

इष्टदानैकनिष्ठं भवानीपतिं
द्रष्टुकामो मठात्सुष्ठ्वयं निर्ययौ ।
द्रष्टृपौरव्रजैर्हृष्टगन्तृद्विजैः
पुष्टिमापन्पुरे विस्तृता वीथिकाः ॥ ५३ ॥

सिक्तशीताम्बुभिर्व्यक्तशीता बृह-
त्तोरणानां तथा घोरणीभिर्युता ।
प्रत्यगाराग्रसंभाव्यरम्भावली
मङ्गलस्वर्णिभा भृङ्गपुर्याबभौ ॥ ५४ ॥

छादिते छत्रभेदैः समस्ताम्बरे
सादराः सर्वगन्धर्वदेवाङ्गनाः ।

एतमालोकयन्त्यत्र किन्त्वागताः
इत्यतर्क्यन्त तत्पौरकान्तास्तदा ॥ ५५ ॥

तावका एव पुण्योदया निस्तुलाः
सर्वमिष्टं त्वया निर्वहत्येव नः ।
इत्यभिव्यञ्जिहस्तक्रिया नागरा-
श्चारु नीराजयन्त्येतमारात्रिकैः ॥ ५६ ॥

भ्राजिताचारलाजानवाचीकरन्
पौरकन्याः करैर्योगिराजोपरि ।
दिव्यपुष्पाणि वृष्टानि देवैरिवा-
भान्ति भूमौ किमित्यूचिरे प्रेक्षकाः ॥ ५७ ॥

योगिराजो मठान्निर्गतः संभ्रमा-
च्छ्रीभवानीपतेः सद्गिरिं तत्पुरे ।
संपरिक्रामति स्मामराद्रिं यथा
भास्करो भूरितेजास्तमोनुत्सताम् ॥ ५८ ॥

प्रस्तरस्तम्भमध्योदितेभाननं
नूनमक्ष्णोः फलं प्रैक्षतात्युज्ज्वलम् ।
संनमन्सन्नुवन्नुन्नतश्रीभरः
प्रार्थयद्योगिनां पार्थिवः सार्थकम् ॥ ५९ ॥

तं भवानीपतिं संभ्रमादीक्षिता-
लम्ब्य सिह्मासनं संभजन्नास्त सः ।
मङ्गलारात्रिकोद्भ्राजिनीराजना-
न्याद्दरास्साधु लक्ष्मीकरोऽचीकरत् ॥ ६० ॥

धीरवर्यस्तदा भूरिवित्तं करा-
म्भोजयुग्मेन तत्पादयोरार्पयत् ।
तौ तदा शोभितौ पाणिसंस्पर्धया
मेरुसंधारणोज्जृम्भमाणाविव ॥ ६१ ॥

तत्प्रसादं समादाय मोदात्सुमं
संभ्रमाच्छोभमानां भवान्यम्बिकाम् ।
साकमालोकतास्तोकसेवाकरैः
प्राणमच्छंकरप्राणनाथां मुनिः ॥ ६२ ॥

सोऽणिमाद्यावृतां देवतासेवितां
ब्रह्मविष्ण्वादिभिर्नित्यमभ्यर्चिताम् ।
सादरं साधु राजाधिराजेश्वरीं
चिन्तयन्नन्तरानन्दमाविन्दत ॥ ६३ ॥

प्राज्यसद्योगसाम्राज्यदामीश्वरीं
राज्यसारं मुनीराज्य चारात्रिकैः ।
पूज्यमानां सुरैः रज्यदार्यावलीं
युज्यतेस्मैष संपूज्य चित्ते मुदा ॥ ६४ ॥

आगतोऽयं ततः संप्रविष्टो मठं
किंकरश्रीकरं शङ्करं प्रैक्षत ।
साभिमानं सदा शोभमानं पुरे
पूजितं राजभिः पूजयामास च ॥ ६५ ॥

धीरवाक्सारदां शारदाम्बां तथा
भूरिवैशारद्यं पारदां संसृतौ ।

नो चिरादीक्षिताऽतृप्यदात्मन्ययं
स्वाचरत्किं च चेतस्यतीवार्चनम् ॥ ६६ ॥

संभ्रमात्तत्प्रसादं स्रजं प्राददच्छ्रीमठान्तस्स्थितश्चन्द्रमौलीश्वरम् ।
मङ्गलं रत्नगर्भद्विपास्यं तथा
मङ्गलारात्रिकै रञ्जयामास सः ॥ ६७ ॥

योगिराजस्य चामुष्य दृग्दोषहृद्राजधर्मोचितं शिष्यलोको व्यधात् ।
अन्नभेदैर्बलिं निर्भरं प्रक्षिपन्
सूक्ष्मवासांस्यपाकीर्ष्ट पार्श्वद्वये ॥ ६८ ॥

अनुज्ञां स प्राज्ञः सकलजनतायै समदित
प्रभुः प्रेमासन्नं बसववसुधापालसचिवम् ।
यथार्हं सन्मानांशुकमपि ददत्प्रैषयदयं
सुविद्वत्संप्रीतः समधिकमथादीप्यत मठे ॥ ६९ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यादिबिरुदावलीविराजित श्रीमन्नृसिंहभारती करकमलसंजातसकलविद्याविशारदपंडितपुण्डरीकमण्डलीमार्ताण्ड श्रीसच्चिदानन्दभारतीमुनीन्द्रनिर्मापिते विद्वद्बालकलक्ष्मणशास्त्रिविरचिते श्रीगुरुवंशे महाकाव्ये एकादशः सर्गः ॥

---

## ॥ विशेषसूचना ॥

### (एकादशसर्गे)

श्लो० १ — शिवप्पनायकस्य कालः १६४५—६०

श्लो० ५ — इयं च वंशपुरी इदानीं 'बेड्नूरु' इत्युच्यते। प्राचीनकन्नडे 'बिदुहल्लि' इति अस्य नाम। अस्य च वेणुग्रामः (மூங்கில் கிராமம்) इत्यर्थः। १६३९ तमे संवत्सरे वीरभद्रनायकः इक्केरीं विहाय बेड्नूरुनगरमेव स्वीयराजधानीं कल्पयामास।

श्लो० १९ — इमे उत्सवाः शृङ्गगिरौ प्रतिसंवत्सरं महता कोलाहलेन प्रवर्तन्ते।

श्लो० २२ — १६६० तमे संवत्सरे शिवप्पनायकः स्वीयं आज्ञारूपं संदेशं संप्रेष्य कूडलीमठाधीनं भूमिक्षेत्रद्रव्यादिकं सर्वमपि शृङ्गेरीमठाधीनं कारयामास।

श्लो० २७ —

श्रीनरसिंहभारतीस्वामिनां (६) कालः - १६६३–१७०५।

श्लो० ३२ — चन्नमाम्बाराज्ञीकालः १६७१—१६९६।

श्लो० ३७ — १६८६ तमे क्षयसंवत्सरे तादृशक्रूरदुर्भिक्षेण जना बाधिता अभवन्।

श्लो० ४४ —

श्रीसच्चिदानन्दभारतीस्वामिनां (२) कालः १७०५–१७४१।

श्लो० ६९ — बसवप्पनायकस्य (१) कालः १६९६—१७१४

———

# NOTES

V 1. Śivappa Nāyaka 1645—60.

V 5. Vamśapurī in Bednūr. (called in old Kannada Bidruhalli — the bamboo village)

In 1639, Vīrabhadra Nāyaka had transferred the seat of government from Ikkēri to Bednūr.

V 19. These *utsavasas* continue to be an important annual function in Śringēri.

V 22. In a *nirupa* dated 1660 Śivappa ordered the handing over of those lands of the Kuḍali Math to the Śringēri Guru.

V 27. Srī Narasimha Bhārati VI. 1663—1705.

V 32. Rāṇī Channamāmbā 1671—1696.

V 37. Famine of *Kshaya* year corresponding to A. D. 1686.

V 44 Śrī Sachchidānanda Bhārati II. 1705—41.

V 69. Basavappa Nāyaka I. 1696—1714.

# द्वादशः सर्गः ॥

ततः सच्चिदानन्दयोगीन्द्रचन्द्रः सदानन्दनस्फीतदैनन्दिनश्रीः ।
जगन्मङ्गलोत्तुङ्गसच्छृङ्गपुर्यां व्यराजत्तरां पट्टभद्रस्थिरश्रीः ॥

जनोद्गीतमूर्तिर्जगत्ख्यातकीर्तिः स्वयंभातनिश्शेषविद्याविशेषः ।
महाधैर्यसत्वो महौदार्यचित्तो महानित्यमुं तं महीशाः शशंसुः ॥ २ ॥

सदा देवसंभावनैकस्वभावो विभात्रानुभावोरुभावाढ्यभक्तिः ।
अथाकारयच्चन्द्रमौलीश्वरस्य प्रविभ्राजितं राजतं मण्टपं सः ॥ ३ ॥

अभात्कश्चिदाशान्तविख्यातकीर्तिः
शिवाजिक्ष्मेन्द्रस्य पौत्रो धरित्र्याम् ।
शिवार्चाधुरीणाखिलस्वीयलोकः
कुलाचारनिष्ठः प्रियस्मार्तपक्षः ॥ ४ ॥

तुरुष्काधिपं विद्धकर्णान् द्विजादीन् महादेवताश्चापि विभ्रीषमाणम् ।
सदानेकलक्षाश्वपं सार्वभौमं व्यजेष्टादिदिल्लीश्वरं भास्वरं यः ॥ ५ ॥

चिराच्छंकराचार्ययोगीन्द्रधुर्यस्थलस्यास्य माहात्म्यमाकर्ण्य सम्राट् ।
अनेकं धनं स्वीयविज्ञप्तिपत्रीं महार्हांशुकं प्राहिणोत्सोऽयमस्मै ॥ ६ ॥

समालोक्य विज्ञप्तिपत्रीं स मोदात्समादाय संप्रेषितं चांशुकादि ।
महत्यां समित्यां महाराजमेतं ससामाजिकः श्लाघयामास योगी ॥

विभूतिं विभूतिप्रदां शारदाम्बाप्रसादस्रजं प्रैषयत्स प्रमोदात् ।
समाधाय तन्मस्तके सार्वभौमस्ततो निर्वृतश्चाक् वर्धयते स ॥ ८ ॥

ततश्चेन्नमाम्बासुतः केलदीन्द्रः समाकर्ण्य वृत्तान्तमत्यन्तहार्दात् ।
बुधं मन्त्रिधुर्यं मुनीन्द्रान्तिकं द्राक् समाकारणाय प्रभुः प्राहिणोत्सः ॥

समायान्तमाभाष्य तं सान्त्ववाक्यैः सुसंमान्य भूलोकसंमान्ययोगी ।
ततो वंशपुर्यां प्रयाणाय सर्वान् स्वकानन्वजानात्सुसन्नद्धतायै ॥१०॥

ततो निर्ययावार्यराट् शृङ्गपुर्या महान्दोलिकां संभ्रमेणाधिरुह्य ।
अनेकातपत्रैः स्फुरच्चामराभ्यां दिवादीपिकाद्यैः समुद्यज्जयश्रीः ॥ ११ ॥

ससामाजिकः सुप्रशस्तैः समस्तैर्बुधाग्रेसरैर्भासुरैर्भूसुरौघैः ।
बभासे तदा सच्चिदानन्दयोगी यथा द्वारकानिर्गतश्चारु कृष्णः ॥१२॥

ततस्तत्र तत्राध्वनि प्राज्यशिष्याः ददुर्भूरिभेदान् जना भागधेयान् ।
लसद्भक्त्यमुष्मै प्रतीक्ष्य प्रवीक्ष्य स्फुटप्रेम जग्राह सर्वं यतीन्द्रः ॥

वनं वर्त्मनि प्रैक्षतात्यन्तरम्यं द्रुमाः पुष्पवृष्टिं व्यधुः पार्श्वयुग्मे ।
मरुचालयन् केतुचेलानमुष्याकिरन् शीकरान् पर्यहार्षीच्छ्रमं च ॥

गुरुं विश्वलोकानुकम्पैकशीलं विशंकाः कुरङ्गाश्चिरं वीक्ष्य तस्थुः ।
इदं स्वं वनं सन्मुनेराश्रमोऽभूदितीव प्रमोदादधुर्दग्विकासम् ॥ १५ ॥

तदान्दोलिकामौक्तिकानीक्षमाणा अवाधीरयंस्तत्र वेणून् करीन्द्रान् ।
चलाभिर्लताः पल्लवैरङ्गुलीभिश्चरन्मारुतप्रेरिताः पुष्पहासाः ॥ १६ ॥

नृसिंहोद्भवोऽयं सदा सिंहनादः समाभाति सिंहासने मौनिसिंहः ।
इतीदं निशम्येव सर्वेऽपि सिंहाः गुहायामविक्षन्निति प्रैक्षि लोकैः ॥

शरण्यो द्विजानां सरण्यां कदाचिच्छुमे तुङ्गभद्रातटे विश्रमाय ।
न्यषीदत्प्रसीदन्मुनिः सप्रमोदो महाराजचित्तैर्महीपालमान्यः ॥ १८ ॥

वसन्तादयस्तत्र सन्तं महान्तं समन्तात्समायातवन्तो विभेजुः ।
प्रसूनैः फलैः स्वस्वकालप्रभूतैः प्रवर्ण्यर्तवः षट् च सर्वैर्निषेव्यम् ॥

समो भाति को वाऽस्य भूमण्डलेऽस्मि-
न्गुणानस्य को वा कविः स्तोतुमीष्टे ।
इति प्राय आख्यान्ति को वेति शब्दान्
वसन्ते पिकास्तत्र पश्यन्त एतम् ॥ २० ॥

गुणानस्य गायन्त्यमन्दं मिलिन्दाः सदा सच्चिदानन्दयोगीन्द्रविन्दोः ।
इतीमांस्तदा सत्यवाग्वक्तृगात्तून् फलैर्मोदयन्तीव चूता नितान्तम् ॥

इदंधार्यकौसुम्भवासोरुणिम्ना जितानां शुकान् किंशुकानां मुखानि ।
स्वचंचूमुखैः किं च चंचूर्यमाणान्नतानां प्रतोतुद्यमानानवेमि ॥ २२ ॥

वधूसङ्गदोषं समाकल्प्य भृङ्गा बहिश्चक्रिरेऽस्मान्समुद्धारयेति ।
इदं वक्तुमग्रे गुरोश्चम्पकानि स्वकं व्याददत्याननं तत्र शङ्के ॥

भयान्मल्लिकोद्यल्लताः श्लिष्टसालाः विदद्भिर्गुरोः सद्यशोगौरिमाणम् ।
पदैस्ताड्यमानाश्चरच्चञ्चरीकैः सुमान्युत्किरन्ते शुचौ तत्पुरस्तात् ॥

मुनीन्द्रे ततस्तुङ्गभद्राऽवगाहं चिरादादधाने समन्तात्तरङ्गैः ।
समाकारयन्तीव सर्वान् तदीयानभान्निर्मलीकर्तुकामा निकामम् ॥

शिरोभूषणं सोपधानं च सिंहासनं भाति मुक्तामयं योगिराजः ।
स्वयं चास्य हस्तादिमाङ्गानि मुक्ताः स्फुरत्स्वेदविन्दुच्छलाद्बिभ्रतीव ॥

फलान्याम्रमुख्यानि पक्वानि जग्ध्वा
[illegible]पाना अमुष्यां तदिन्याम् ।

धरित्रीसुरा योगिराट्सन्निधाने
यथार्थाभिधानाः कृतार्थास्तदानीम् ॥ २७ ॥

प्रहर्षप्रकर्षेण वर्षासु नृत्यं मयूरा गुरौ भाति तत्राचरन्ति ।
सदा जीवनं संददत्यैकरूपे समस्ताशयाह्लादिधाराधरेऽस्मिन् ॥

परागोपमां धत्त लोका विभूतिं न चेत्कर्तरीभिर्दलैर्वश्छिनद्मि ।
स्फुटत्केतकैः सत्परागैः समीरो विभूतिद्रुहो भीषयत्येव मन्ये ॥

परिव्राजकेनाच्छहंसात्मकेनामुना निर्जिता लज्जिता राजहंसाः ।
विदूरे गता मानसे बोधमाप्तुं महद्भिर्जिताः कुत्र दृश्या वसेयुः ॥

सुलग्नालिशावैर्लसज्जातिपुष्पैः प्रपश्यन्ति नेत्रैरमुं योगिराजम् ।
वनीदेवताः पल्लवैरंगुलीभिः कृताञ्जल्युपावस्तुमभ्यर्थयन्ति ॥ ३१ ॥

भिदावादिवन्नीरवाहा विनष्टाः शशी तद्यशोवच्छरद्यभ्युदेति ।
समस्ता दिशो निर्मला यस्य हृद्वत्सरोजं तदास्यं विकास्यन्वकार्षीत् ॥

रवेः पाटवं तस्य तेजोवदाभात् शुशोषाथ दुर्वादिगर्वाभपङ्कः ।
अदुर्वर्त्म नद्यो गुरोर्बोधनावद्विकासं च काशं दधौ चामराभम् ॥

हरित्केतुवासोद्युतीरर्थयन्तः समेताः शुका व्योम्नि तत्सन्निधाने ।
श्रिताद्वैतपक्षं वसाम्यत्र यूयं तथा नेति दूरीकृता अन्यतोऽगुः ॥ ३४ ॥

निरालस्यरीतिं गुरोरस्य वीक्ष्य स्वकाजाड्यमल्पं विदित्वा बभूवुः ।
अहानीह खर्वाणि हेमन्तकाले जिताः के न खर्वत्वमापन्ननेन ॥

गुरौ चित्तमुद्यत्यभूत्सूर्यमान्द्यं विपश्चित्परामर्शतात्पर्यभाजि ।
तदीयाशये शीतलत्वं प्रपूर्णं बहिर्निर्गतं भाति शीतं प्रभूतम् ॥ ३६ ॥

तपस्यन्ति तोये जितान्यङ्घ्रिकान्त्या
त्वपाम्लानिमच्छैशिराम्भोरुहाणि ।
वदातानि कुन्दानि चैतस्य पुण्या-
नुकारीणि सर्वैः सदाप्याद्रियन्ते ॥ ३७ ॥

समस्तांश्च यज्ञान् धरानिर्जराग्र्यैरथो कारयन्नुत्सुकेऽस्मिंश्चिराय ।
अभूद्भास्वरः साधु वैश्वानरोऽयं महान् शैशिरे भासमाने सुकाले ॥

अथैवं समस्तर्तुसंसेवितोऽयं तपस्याविहारी वनेषु प्रकामम् ।
अगाद्भीमसेतुं चिरं तत्र भीमेश्वरं लिङ्गमाराधयल्लोकनम्यम् ॥ ३९॥

ततः कारिते कौरवेन्द्रेण दुर्गे परेषां सदा दुर्गमे मार्गमध्ये ।
स्थितं प्रार्थितो दुर्गपालेन दूरात्समभ्यायता स्वीयमागान्मठं सः ॥

समभ्यर्चितः साधु तत्र स्थितैः स प्रणम्रैः समस्तैः प्रशस्तो मुनीन्द्रः ।
विधायाह्निकं स्वागमज्ञापनायै नृपालान्तिकं प्राहिणोन्मन्त्रिवर्यम् ॥

ततो निर्गतो दुर्गगेनानुयातो महावैभवाभोगचिह्नैर्विभास्वान् ।
विवस्वान् यथा दक्षिणाशाप्रदेशाच्चरन्नुत्तराशां बभौ सद्धनेशाम् ॥

ततः प्रेषितास्तेन भूपालकेन क्षितौ भास्वता चन्द्रमाम्नासुतेन ।
अमात्यप्रवर्याः सुमत्येकचर्याः समभ्येत्य तं भक्तियुक्ताः प्रणेमुः ॥

ततः पार्षदाः कोविदा मुख्यशिष्या-
स्तथा राजकीयाः समस्ताश्च सैन्याः ।
जना भूरिभेदान् करानर्पयन्तो
वितेनुश्च साष्टाङ्गमात्मनमांसि ॥ ४४ ॥

स पौरैरशेषैर्विलोक्यो विशेषात्सुरेन्द्रोपमानो विराजन्मुनीन्द्रः ।
नरैः शंसितः प्राविशद्वंशपुर्याः बुधाभीष्टकर्याः प्रतोलीं प्रवर्याम् ॥४५॥

प्रवृष्टाः प्रहृष्टैर्जनैः पुष्पलाजाः धरां पस्पृशुर्नैव नॄणां शिरस्थाः ।
भृशं तत्र संमर्दभाजां तथाह्युत्तमाङ्गस्थितानां च्युतिर्नो कदापि ॥ ४६ ॥

जनानन्दने श्रीमुनीन्द्राख्यचन्द्रे चिरेणोदिते वंशपुर्याख्यवार्धिः ।
अवाप्तो विवृद्धिं ध्रुवं द्रष्टृलोकैरनेकैश्च रम्येषु हर्म्येषु सद्भिः ॥ ४७ ॥

ततः संभ्रमान्नीलकण्ठालयं तं गृहश्रेणिमालास्फुरन्मध्यरत्नम् ।
प्रविष्टः समालोकयच्छंभुलिङ्गं प्रणम्रान्तरङ्गो यतीन्द्रः प्रसन्नम् ॥४८॥

परिक्रम्य सन्नम्य सन्नम्यशीलः स्तुवन्नर्चयन्मानसे मौनिसम्राट् ।
ततो निर्गतः श्रीमठं प्राप शिष्यैर्गजाश्वादियानाधिरूढैः समेतः ॥

अथ श्रीगुरोरस्य पादाब्जयुग्मं समाक्षाल्य संपूज्य नीराज्य भक्त्या ।
तदादाय तीर्थं कृतार्थो बभूव प्रभुर्दानवारेर्यथा धर्मपुत्रः ॥ ५० ॥

यथार्हं समस्तान् समाभाष्य धीमान्
जनान् स्वस्वगेहं समभ्यन्वजानात् ।
विधायाह्निकं साधु देवार्चनाद्यं
प्रकर्षेण तस्थौ महर्षिः स तत्र ॥ ५१ ॥

ततश्चत्रमाम्यातनूजः सुराजा समाकर्ण्य वृत्तं समस्तं प्रशस्तम् ।
तदा प्राहिणोदागतं सन्निधौ स्वे प्रसादं तमस्मै स मूकाम्बिकायाः ॥

समादाय सर्वेष्टसंसूचकं तं दधन्मस्तके योगिराजो नुनाव ।
महादेवकान्तां महादेवतां तां भुजङ्गप्रयाताख्यवृत्तस्तवेन ॥ ५३ ॥

जयश्रीजटाले जगच्चित्रलीले सदा रम्यखेले सदानम्यशीले ।
अये लेखपाले विशालेऽद्यकाले मदालम्ब मूकाम्ब लोकाम्ब पाहि ॥

सतां हृद्विहारे कृतारिप्रहारे तनौ पूर्णहारे मनोघापहारे ।
मुरारेरुदारे पुरारेरदूरे करालम्बनं देवि मूकाम्ब देहि ॥ ५५ ॥

नतावन्यधीने श्रितानामदीने स्तुतिप्रेमदाने मतिप्रेष्ठभाने ।
रमानेकमानेऽभिमानेऽसमाने ममानेकमिष्टं प्रदद्या भवानि ॥ ५६ ॥

त्रिलोकीशजाये द्रुतध्वस्तमाये मनस्यर्चनीये मनूपासनीये ।
विधेयेऽवधेये प्रदेये प्रणेये त्वदीये पदाब्जे मदीये हृदि स्ताम् ॥५७॥

अपेक्षावदान्ये कटाक्षात्तधन्ये महाभाग्यमान्ये महीध्रेशकन्ये ।
शरण्येऽतिपुण्येऽग्रगण्येऽनुगुण्ये प्रपन्ने मयि त्वं प्रसन्नेक्षणैधि ॥

स्वपादाब्जभृङ्गे कृपादाय्यपाङ्गे गिरीशान्तरङ्गे स्फुरद्वाक्तरङ्गे ।
कुरङ्गेन्द्ररङ्गे चिरं गेयतुङ्गे सुजंघे तवांघ्री धराम्युत्तमाङ्गे ॥ ५९ ॥

महाराजराजे मिलद्रङ्गपूजे दिवौकःसमाजेष्टदैत्यार्दनाजे ।
सदा जेतृराजे विराजेविंराजे भजे हृत्सरोजे भजत्कल्पभूजे ॥ ६० ॥

तनूभूमहासेनहार्दावभासे सखीनां विलासे मुखश्रीविकासे ।
सदा सेविदासे दयासेकिहासे गुणानां निवासे चिरं त्वामुपासे ॥६१॥

इत्यम्बायाः स्तोत्रपरस्तापससम्राट्
कीर्त्या सान्द्रं श्रीबसवेन्द्रं क्षितिचन्द्रम् ।
देव्योद्यन्तं देशमवन्तं सुविभान्तं
वह्नस्तौपीच्चोषविशेषान्वित एषः ॥ ६२ ॥

इति श्रीगुरुवंशे महाकाव्ये द्वादशः सर्गः ॥

## ॥ विशेषसूचना ॥

( द्वादशसर्गे )

श्लो० ४ — शिवाजी (२); अयं राजारामरायस्य ज्येष्ठभार्यायां ताराबाय्नाम्न्यां जातः ।

श्लो० ९ — बसवप्प(१) कालः— १६९६—१७१४

श्लो० ५२ — मूकाम्बा; इयं च इक्केरीनायकानां कुलदेवता।

---

## NOTES

**V 4. Śivaji II son of Rāja Rām by his first wife Tārābhāi.**

**V 9. Basavappa I 1696-1714.**

**V 52. Mūkāmbā of Kollūr was a tutelary deity of the Ikkeri Nāyakas.**

---

## त्रयोदशः सर्गः ॥

ततः ख्यातः प्रातर्गजबदनतातस्य भजनं
विनिर्वर्त्य प्रीत्या स मतिमदमात्यान्प्रहितवान् ।
मुनीन्द्रासन्नं द्राग्वसवधरणीन्द्रो गुणनिधिः
समाह्वातुं प्रह्वान्विबुधजनबह्वादरनुतः ॥ १ ॥

व्यधुर्याता एतन्मठमधिकमातत्य विनती-
र्महाप्राज्ञं राज्ञो गृहगमनविज्ञापनममी ।
सुशिष्यान् संतोष्योचितद उरु हृष्यन्यतिपतिः
सदस्यैः स्वारस्याच्चलितुममनस्यन्नृपगृहम् ॥ २ ॥

अथ प्रौढो बाढं त्वरितमधिरूढः स शिबिकां
महावाद्यैर्हृद्यैः पटहपणवाद्यैः समुदितैः ।
महामात्यैश्छत्रप्रमुखविरुदत्रासितपरः
नृपागारं सारं भुवि गुरुरुदारः समगमत् ॥ ३ ॥

निशम्याभ्युद्गम्योचितमधिकरम्यः क्षितिपतिः
समायान्तं भान्तं द्रुतमुपनिशान्तं यतिपतिम् ।
समस्तैः स्वीयैस्तैः सह विनुतमास्थानमनय-
द्वसिष्ठं सुश्रेष्ठं दशरथ इवेष्टं कलयिता ॥ ४ ॥

प्रशंस्यौ स्मेरास्यौ परिजननमस्यौ सपदि तौ
मुनीशक्षोणीशौ विलसदुपवेशौ परिषदि ।
चरित्रौघैश्चित्रौ कनकहिमगोत्रोपमिततां
प्रपन्नौ संपन्नौ जयत उपपन्नौ स्म वचनैः ॥ ५ ॥

सुशास्त्रोपन्यासानकृत विबुधासक्तनृपतेः
सभायां स प्रेयान् श्रुतियुगसुखायाखिलनृणाम् ।
तदभ्याशे सर्वैः सुमतिभिरुपश्लोकितमभू-
न्मुनेर्धाष्ट्यं दृष्ट्वा प्रभुरपि समश्लाघततमाम् ॥ ६ ॥

अनूनं सन्मानं व्यतनुत स मौनिक्षितिभृते
भृशं प्रादान्मोदादपि च विबुधेभ्यः सुवसनम् ।
ततः प्रेम्णो भूम्ना समुचितवचांसि प्रणिगदन्
समुत्थायास्थान्याः क्षितिपतिलकः प्रैषयदमुम् ॥ ७ ॥

महासैन्यैर्मान्यो नृपतिसचिवैर्धन्यविबुधैः
स्तुवद्भिर्गायद्भिः पटुपटहभेरीमुखरवैः ।
गुरुः पोष्यैः प्रेष्यैरपरिमितशिष्यैः परिवृतो
मठं प्रागाद्योगातिशयफलभागादृतगुणः ॥ ८ ॥

ततो नित्यं भक्तैः प्रतिसदनमादृत्य कलितां
वरां भिक्षां गृह्णन् चरणकमलाम्बु प्रवितरन् ।
पवित्रीकुर्वाणो निखिलनिजशिष्यान् वितुतस-
च्चिदानन्दस्वामी महितमतगामी व्यजयत ॥ ९ ॥

अथैकस्मिन् घस्रे स्वयमपि नृपः प्रेमसहितो
महाभिक्षां भक्ष्यैरतिरुचिरभोज्यैरुपचितैः ।
महापोतानीतैर्बहुभिरितरद्वीपगफलै-
र्यशस्वी चेतस्वी द्विजवरगृहेऽकारयदयम् ॥ १० ॥

समेत्यापि प्रीत्या सुषुमविभवैः सर्वसचिवै-
र्युतो नम्रः सम्राट् यतिपतिसमीरे सविनयम् ।

यथौचित्यं स्तुत्यं तमपि बहु सन्मान्य सुगुणो
गृहीताशीराशिः स्वपुरगमनायान्वमनुत ॥ ११ ॥

ततोऽर्हदीपाद्यैर्विविधविरुदैः शिष्यवरदो
महानागाद्वेगाच्छ्रितशुभकरीं शृङ्गनगरीम् ।
समायातान् राजप्रहितसचिवांस्तानुचितमा-
दधानः सन्मानं नृपपुरमुपैतुं प्रहितवान् ॥ १२ ॥

ततो हृद्यं विद्याव्यसनमनिशं साधु विदध-
ज्जनाश्चर्याश्चर्या जगति रचयंस्तांश्च वशयन् ।
निदानं मोदानामभिलषितदानं कलयिता
चिदानन्दैर्नन्दन् कतिपयदिनान्येवमनयत् ॥ १३ ॥

भवानीकान्तस्याधिनगरमनेकोत्सवभृत-
स्त्रिलोकीनाथस्यानुपमपरमैश्वर्यवसतेः ।
महाभक्त्यासक्त्या स खलु शिबिकां संव्यरचय-
द्विचित्रां चित्रौघैर्लसितकलधौतेन कलिताम् ॥ १४ ॥

अथैकस्मिन् घस्रे शुभतममुहूर्ते सुविधिना
भवानीभर्त्रे तां भविकभरवान् प्रार्पिपदयम् ।
महीदेवानेवं दशशतमतीतान् बहुविधै-
र्वरैर्भक्ष्यैर्भोज्यैर्बहुतरमुदाऽभोजयदपि ॥ १५ ॥

नगर्यां शृङ्गेर्यामपि सकलवीथीषु परितो
भवानीशस्यैवं त्रिविधविविधानुत्सवभरान् ।
अकार्षीदुत्कर्षादधिशिबिकमीशस्य यतिराट्
गिरीशोऽप्यस्मार्षीद् [illegible] स सदा ॥ १६ ॥

विधायैतत्प्रीत्याचरितुमुरु शृङ्गेशमहनं
ततः प्रागात्किग्गाभिधपुरमुदारो विबुधराट् ।
महायोगीशानात्मकहृषितवैभाण्डकिऋषिः
स्वयंभूलिङ्गात्मा प्रतिदिनविवृद्धिं कलयति ॥ १७ ॥

तपस्यायां अस्यालयमचलमासन्नगतम-
प्यगाच्छीघ्रं व्याघ्राध्युषितनरसिंह्मोदयभुवम् ।
स नन्दिन्यां धुन्यां सुविहितसमस्ताह्निककृति-
र्ददर्शैषे रम्याश्रमपदमथो तापसवरः ॥ १८ ॥

स तत्राविर्भूतं वरदनरसिंह्मं सुरवरं
समद्राक्षीद्दक्षः प्रणतजनसंरक्षणपरः ।
स कृत्वा तत्पूजामृषिवरपदे द्रष्टृहितदे
समीक्ष्य प्रेक्षावान्विनुतवनदुर्गामिमहयत् ॥ १९ ॥

ततः शैलाच्छ्रीलस्त्वरितमवरुह्यैत्य नगरीं
मुहुश्चैतां ज्ञाता वरिवसितशृङ्गेशचरणः ।
उदारोऽसौ दीपोत्सवमुखसपर्याविधिकृती
जनानन्दी वन्दीडितकृतिरगाच्छृङ्गनगरीम् ॥ २० ॥

ततः सुब्रह्मण्यं सुरनरशरण्यं दिविषदां
वरेण्यं कारुण्याम्बुनिधिममितोत्साहदिवसे ।
महाचम्पाषष्ठ्यां महयितुमना मान्यमुनिरा-
डिति ज्ञात्वा राज्ञा प्रहित इह विज्ञातृसचिवः ॥ २१ ॥

ततो राज्ञोऽनुज्ञां सपदि स परिज्ञाय विनयी
पथि स्थाने स्थाने मुनिपवरयानाय वसतीः ।

समाकल्प्यानल्पा- प्रवरमठकल्पाः पटुरयं
समभ्येत्याभ्याशं गमनविषयेऽभ्यार्थयत तम् ॥ २२ ॥

सुभक्त्या तेनोक्तं स गुरुरथ चित्ते विनिदध-
न्निजान् शिष्यान् पोष्यानपि च परितोष्यान्सुसचिवान् ।
बुधादीन्सन्नद्धान् कलयितुमना दुन्दुभिवरं
भिदावादीन्द्राणां भयभरकृतेऽनादयदयम् ॥ २३ ॥

ततः प्रौढो गाढप्रमदमधिरूढः सुशिबिकां
चलन्सर्वैरुर्वीसुरवरगुरुः शृङ्गनगरात् ।
उषित्वा वाराहीविमलतटिनीसंगमतटे
स नित्यं निर्वर्त्याखिलविधिमगाद्धट्टशिरसि ॥ २४ ॥

ततः सह्याहार्यादचिरमवरुह्याथ उपयन्
ऋषीणां वासार्हां सकुसुमफलां तौलवधराम् ।
स तत्रत्यान् देवान् सुचिरमभिसंपूज्य सकलान्
सहानेकैर्लोकैर्द्रुतमथ ययौ कोत्कटपुरम् ॥ २५ ॥

ततोऽद्राक्षीद्दक्षं नतभरणदीक्षं सुरनुतं
महेशं वैद्येशं भविकशिवगङ्गातटगतम् ।
स्फुरच्छ्रीशैलेशप्रणिहतशिरोवैद्यकरणा-
दनूनार्थाख्यानं समभहयदानन्दभृदयम् ॥ २६ ॥

अयासीत्प्रोल्लासाद्बिलिनेलेपुरं सोऽयमचिरं
चिरं दृष्ट्वा कृष्णं नतहृदि चरिष्णुं सुरुचिरम् ।
महारम्याकारं बहुभिरुपचारैश्च सहय-
न्नवात्सीदुत्साहाच्छ्रजपुरमनोत्सुकमनाः ॥ २७ ॥

समायानं नूनं यतिपतिमणेरस्य सहसा
समाकर्ण्याभ्यर्णं शरजनगरस्थाखिलजनाः ।
समाजग्मुर्हर्षात्पदयुगसमालोकनपरा-
श्चिरादेशादेशाद्भृशमुपगता यात्रिकवराः ॥ २८ ॥

महाराष्ट्रा दृष्टा अधिनिटिलमर्धेन्दुसदृशं
त्रिपुण्ड्रं बिभ्राणाः सिततरविभूत्या रुचिरया ।
समाहूतस्वीयाः पदयुगदिदृक्षारयपरा
वयं धन्याः पुण्या गुरुरिह समागादितिवदाः ॥ २९ ॥

तथान्ध्रा नीरन्ध्रं क्रमपठनशीला वृतशिरः-
प्रदेशाः संव्यानैः करधृतजलापूर्णकलशाः ।
मुदाऽदक्षे कक्षे दधत उरुपेटीं शुचिपटीं
धरन्तश्चात्यन्तं सितसदुपवीतानि विमलाः ॥ ३० ॥

चलद्भूषालम्बश्रवणयुगला द्राविडगणा
विशालं संव्यानं कटितटमुपावेष्ट्य दधतः ।
शिखां संबिभ्राणाः शिरसि चतुरङ्गेण सदृशीं
मिथोभाषाकोलाहलकरणशीलाः प्रमिलिताः ॥ ३१ ॥

कथंचिद्वृण्वानाः शिरसि वरकौशेयसिचयं
बुधंमन्या गन्धान् दधत ऋत एवाक्षतभरात् ।
सदा पाण्योर्दण्डं व्यजनमपि संबिभ्रत इमे
निजां भाषां तोषात्समभिदधतस्तौलवजनाः ॥ ३२ ॥

पुरोमूर्धावद्धप्रविपुलशिखाः साध्वसिमुखाः
महादण्डं छत्रं दधत उत हस्ते बहुमताः ।

सदा तैलालेपात्समधिकतरात्स्निग्धवपुषः
सदाचारा नित्यं सुचिरंलपनाः केरलजनाः ॥ ३३ ॥

लसत्काक्वालापा अधिनिटिलधार्योर्ध्वतिलकाः
सुसंस्पर्शाबीजावलिसुपहसन्तोऽसितरदैः ।
धरन्त्योऽप्यापार्ष्ण्यन्तरवसनमापाटलमपि
प्रतीताः प्राग्देशात्प्रियशरजकर्णाटकजनाः ॥ ३४ ॥

कठोराणोंच्चाराश्चरणयुगलीमध्यविलुठ-
द्बृहत्कच्छाः स्वच्छाशयसुलपना न्यादपटवः ।
चलत्प्रोद्यन्मुक्तामणियुतबृहत्कुण्डलधरा
उदीच्याः कर्णाटा अपि जितकपाटाः सदुरसा ॥ ३५ ॥

कचादानासाग्रादृजुकलितमृत्स्नोर्ध्वतिलका
मषीरेखाफालाः परितपनमुद्राङ्किणभुजाः ।
असोढैतद्भेरीध्वनिमपि दधानाः श्रुतियुगे
तुलस्याः पत्रालीं विमतमनसो माध्वनिवहाः ॥ ३६ ॥

प्रधानामात्याद्याः केलदिपकृपापूर्णविभवा
विधाप्याशेषाणां विलसदुपकार्या गुहपुरे ।
गृहीतानेकोपायनसमुदयप्राज्यभृतका
लसद्यानार्वाद्याः परिभरितवाद्याः सविनयाः ॥ ३७ ॥

तथा विद्वद्वर्या निजमननधुर्या अविरतं
लसद्वासोभूषा अमितपरितोषा गुरुपदे ।
दिदृक्षास्मेराक्षा इतरनिरपेक्षा द्रुततरं
वराः स्मार्ता माध्वा निखिलमतवन्तोऽपि च परे ॥ ३८ ॥

विनिर्यातं तस्माद्धिळिनेल्लेपुराद्वीरमथ स-
चिदानन्दाख्यानं समुपगतनानाविधजनाः ।
वितन्द्रं योगीन्द्रं मुहुरपि समालोक्य चरणौ
प्रणेमुः साष्टाङ्गं सरुचि नुनुवुश्चापि तुतुषुः ॥ ३९ ॥

प्रसादस्नानादेः सुसमय इवात्यन्तमिलितै-
र्जनैः सान्द्राणि श्रीगुहपुरगवर्त्मानि विबभुः ।
तदा पार्श्वद्वन्द्वेक्षकगुरुमुखं भूरिवलनै-
र्विभातं लोकानां गुहविसमतासूचकमिव ॥ ४० ॥

तदा यातायातैर्नृभिरुपचिता सेतुभृद्दिवा-
गतान्धारा तानाह्वयदिव तटाघातनिनदैः ।
तरङ्गैः स्वैर्हस्तैः झषवदनभूयोविकसनै-
स्तथा हर्षोत्कर्षादधिकमहसीत्किं नु कुमुदैः ॥ ४१ ॥

पुरीमेतां धाराद्वयपरिवृतां वीक्ष्य विबुधाः
प्रशस्ताः संतोषात्सततममृतेनावृततराम् ।
श्रुतौ ख्यातां पूर्वं सपदि कलितां लोचनपथे
प्रजायुःकीर्त्याद्यं स्पृहितमधियामेति जगदुः ॥ ४२ ॥

तदा सुब्रह्मण्याद्यधिकतरसंकीर्तनभुवां
महाभेरीशंखाद्यनुपममहावाद्यजनुषाम् ।
ध्वनीनां दिग्योगान् प्रविघटयितुं च प्रभवतां
प्रयातुं पातालं सृतिरिव विलद्वारमलसत् ॥ ४३ ॥

जनैर्नम्यो रम्यः स गुरुरवरुह्योपशिबिकं
समद्राक्षीन्मध्येसरणि विदितं श्रीगणपतिम् ।

सतां सिद्धीर्दातुं प्रचलयति हस्तं ध्रुवमयं
किमाह्वातुं भक्तानिति मनसि तद्ध्यानमकरोत् ॥ ४४ ॥

प्रविष्टस्तत्पुर्यां प्रवरदिनदीपादिविरुदै-
र्बहिः प्राकारान्तः स नरपतिसिंहासनगुरुः ।
असोढ्वा तन्माध्वा निरुपमपताकां कतिपये
निरोद्धुं प्रोद्योगं गुहगृहबहिर्द्वारि विदधुः ॥ ४५ ॥

तदा जघ्नुः सर्वान् गुरुनृपतिसामीपिकजनाः
धृतै रौप्यैर्हैमैर्विततरवेत्रैर्बहुबलाः ।
समायाताः कृष्णातटत उडुपाच्च स्थलसदो-
प्यनेके ते भग्ना अपजयमवापन् खलतमाः ॥ ४६ ॥

तथा देशाद्देशाद्भृशमुपगतो यात्रिकगण-
स्तदा दृष्टान् दृष्टान् सपदि सहसाऽतीतडदमून् ।
मषीफालान् माध्वान् मृदुपचितदीर्घोर्ध्वतिलका-
न्समन्ताच्चप्ताङ्कान्बहलतुलसीकाष्ठवहनान् ॥ ४७ ॥

कराग्रे बिभ्राणान् बृहदुदरमास्ये विकसितं
गले सूक्ष्मं पात्रं मलिनवपुषः श्वेतदशनान् ।
दृढं कक्षे कृष्णाजिनकलितपेटीं च दधतः
खलान् मार्गं मार्गं पथि पथि भिया धावनपरान् ॥ ४८ ॥

बिलद्वारं याताः शरणमथ केचिद्बत खला
गुहां सुप्राविक्षन् गुहविहरणाद्रेः कतिपये ।
परे धारातीर्थे परत उदिता बाहुतरणै-
र्महाहाहाकारा अहह वद्दहो मा... ॥ ४९ ॥

अथाशिष्टाः शिष्टाः सिततरमृदा भित्तिगतया
त्रिपुण्ड्रं प्रालिम्पन् कथमपि तदा वञ्चकतमाः ।
जटाधार्यासन्नानलभसितमादाय तु परे
समन्तात्पश्यन्तो निजशिशुकलालाघनरसैः ॥ ५० ॥

अथो सुब्रह्मण्यस्थलविनिवसद्भिक्षुकमठं
क्षणाद्भङ्क्तुं शैवा अपि च जटिलाः स्मार्तनिवहाः ।
वितेनुः प्रोद्योगं हृदि बहुदयालुर्यतिपति-
र्न्यषेधीत्सर्वत्राप्यधिकृतजनान् प्रेष्य सुमतीन् ॥ ५१ ॥

ततोऽवक्षद्दक्षाध्वरहरकुमारस्य निलयं
चरन् प्रादक्षिण्यात्परित उपदेवान्निशमयन् ।
नमन् सुब्रह्मण्यं सहजसहितं वासुकितनुं
करं यच्छन्भक्त्योरु धनमथ नीराज्य तमनौत् ॥ ५२ ॥

प्रसादानादाय प्रचुरकुसुमादीन्मुनिपतिः
समस्तैः शिष्यैस्तैः सकलहृदयाश्चर्यजनकः ।
अनुज्ञाप्य स्वाम्युत्सवविरचने साध्वधिकृता-
न्मठं प्रागात्स्वीयं निखिलविरुदैर्वन्दिविनुतः ॥ ५३ ॥

ततश्चम्पाषष्ठ्यामुषसि भजकाभीप्सितकरं
वरं सुब्रह्मण्यं निरुपमरथोत्साहविभवम् ।
समीक्ष्यानन्दाब्धौ सपदि विनिमग्नः स यतिराट्
प्रसादस्नानं चाकुरुत भुवने विस्मयकरम् ॥ ५४ ॥

तथा चञ्चाधार्यानुपमशिबिकारोहणमहो-
त्सवं प्रैक्षिष्टायं भुजगपतिमूर्तेः शरभुवः ।

दिने तस्यैकस्मिन् व्ययितबहुराः प्रोत्सवतरा-
न्विधाप्यैवं स्तोत्रं बुधजनविनोदी समतनोत् ॥ ५५ ॥

बालात्मैव वसन् भजत्सखतया लीलाद्भुतो भ्राजसे
ऽभ्यंगाद्भोजनशेषलेपनभवान्मातन्नपूर्णाधिकः ।
षड्वक्तो जनकाच्च पञ्चवदनाद्दृश्योऽधिकः सर्वथा
सुब्रह्मण्य भवच्चरित्रजलधिं स्तोतुं समर्थोऽस्मि किम् ॥५६॥

स्तुत्वैवं मठमागतो वहुतरच्छात्रालये तीर्थदो
देशेभ्यः सकलेभ्य आगतमिह स्मार्तव्रजं हर्षयन् ।
पश्चात्तापयिता च साध्वसयुतां माध्वीं यतीशावलिं
प्रोद्यद्दिग्विजयो बभौ गुरुवरः श्रीसच्चिदानन्दराट् ॥ ५७ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यादिबिरुदावलीविराजित श्रीमन्नृसिंहभारती करकमलसंजातसकलविद्याविशारदपंडितपुण्डरीकमण्डलीमार्ताण्ड श्रीसच्चिदानन्दभारतीमुनीन्द्रनिर्मापिते विद्वद्बालकलक्ष्मणशास्त्रिविरचिते श्रीगुरुवंशे महाकाव्ये त्रयोदशः सर्गः ॥

---

## ॥ विशेषसूचना ॥

( त्रयोदशसर्गे )

श्लो० २४ — पश्चिमसमुद्रोपतीरे वर्तमानं आकुम्बेनामकं नगरमेव 'घट्टशिरः' इत्युच्यते इति भाति ।

श्लो० २५ — कोत्कटपुरम् इदानीं 'कोक्कडो' इति व्यवह्रियते । उप्पिनियङ्गाडिसमीपे एतत् वर्तते ।

## NOTES

**V 24. The highest point from which the descent to the western coast strip is now called Agumbe. Perhaps this is referred to as Ghaṭṭaśiras.**

**V 25. Kotkaṭapuram is Kokkaḍo near Uppiniangāḍy.**

---

## चतुर्दशः सर्गः ॥

अथोपदिशमागतैः शरजभक्तवेलापुर-
क्षितीशसचिवोत्तमैर्भृशमुपार्थ्य नीतो यतीट् ।
ददच्चरणपङ्कजामृतमतीव नेरङ्किपु-
र्यधिष्ठित उपाददे सकललोकसंपूजनम् ॥ १ ॥

ततो यतिपतिर्ययौ नुततरङ्गनेत्रावती-
सुसंगततरङ्गिणीवरकुमारधारातटे ।
विनोदिलवणापणे पुरि सहस्रलिङ्गेश्वरं
धरातलविभास्वरं सुरुचिरं चिरं प्रैक्षत ॥ २ ॥

समर्च्य सकलेष्टदं हृदि समस्तसंभारवान्
मनीषितमवापयन्नपि मनीषिणस्तत्र च ।
ततः पुरमुपागतः कलयनारसिह्मालयं
नृसिह्ममभिपूजयन् भुवि नृसिह्म आख्यायत ॥ ३ ॥

ततः सुगुणवङ्गभूरमणमन्त्रिभिः प्रार्थितो
विदूरमभिगच्छता सह च तेन नन्दावरम् ।
इयाय बहुमानवानपि च तेन संमानितो
विनायकमुखान् सुरान् महयिता विजिग्ये बुधान् ॥

विनोदिमुनिपुङ्गवः समधिरुह्य नावं वरां
धुनीभुवनवर्त्मना स इनवल्लिपुर्यां ययौ ।
समार्चयदनर्गलां सदयलम्बदुर्गाम्बिकां
समागमदिहाग्रतस्तदनु कोऽपि भूताग्रणीः ॥ ५ ॥

उवाच गुरुमद्भुतं तव महानुभावेक्षणात्
अवापमतिधन्यतां सह चरामि यातास्त्वथो ।
पयोनिधितटान्तरे ध्रुवमतर्कितोपप्लवः
समेष्यति हरिष्यतेऽपि च मयेति सोऽगान्मुदम् ॥ ६ ॥

जगाम कुडुपं पुरं वरदवासुदेवाश्रितं
प्रगुप्तकदलीवने फणिवराकृतिं योगिराट् ।
अनन्तपदपूर्वकप्रथितपद्मनाभेश्वरं
सभद्रकसरस्वतीप्रवरतीर्थगः प्रैक्षत ॥ ७ ॥

जगत्प्रथितकुक्यपुर्यधिपचञ्चरित्रोन्नतं
प्रसादकृतपावनं धवलपक्षषष्ठ्यां मुहुः ।
सुगन्धकुसुमादिभिः सुपमदीपिकाराधनैः
सभक्ति परिपूजयन् सुखमुवास लोकार्चितः ॥ ८ ॥

सुवर्णकदलीवनादुपगतैः सुसिद्धोत्तमै-
रुपार्थित उपाययौ सपदि तत्पुरं तापसेट् ।
व्यधत्त विधिवन्महागुरुरशेषतीर्थेषु चा-
वगाहनमथादरादपि तथाऽधिभागीरथि ॥ ९ ॥

वरांहतिविकस्वरं प्रवरमञ्जुनाथेश्वरं
प्रसिद्धतरसिद्धराड्विरचितोत्सवैर्भास्वरम् ।
प्रतीतरसवापिकोदितमतीव मुक्तिप्रदं
समस्तविबुधार्चितं समममहीयतासौ यतिः ॥ १० ॥

ततो यतिपतिर्ययौ भुवनकान्तकान्तावरं
ददर्श नतहर्षदं कनकलिङ्गकान्तेश्वरम् ।

अवापि किल कान्तयाभिलषितं यदभ्यर्चना-
दपूजयत पूर्णधीरखिलसाधनैर्मोदनैः ॥ ११ ॥

विदूरत उपायता विदितचौटभूमीभृता
विशेषत उपार्थितो विनयहर्षितस्तत्पुरम् ।
उपेत्य बहुमानितो विनुतसोमनाथेश्वरं
समर्च्य स समावसद्भृशमनेकशिष्यार्चितः ॥ १२ ॥

स कारकलपत्तने सुमहयन्ननन्तेश्वरं
स्तुतीर्व्यधित हेब्बुरीपुरजनार्दनस्वामिनः ।
प्रतीतयतिराट् ततः क्षितिनिरूढहालाडिस-
त्पुरं वरतरं गतो निजमठेऽवसत्प्रौढधीः ॥ १३ ॥

नृसिंहमयमैक्षत प्रणतरक्षणे दीक्षितं
विपक्षवरशिक्षिणं सपदि तत्सपर्यां व्यधात् ।
ततः परमहर्षवान् पुरमियाय कोटीश्वरा-
भिधं सविबुधाग्रणीर्धरणिमण्डले भास्वरम् ॥ १४ ॥

लसन्मकरसंक्रमे सुकृतसंग्रही सागरे
प्रसन्नहृदयो मुनिः समवगाहनं संव्यधात् ।
अतीव समतूतुषत्स महनेन कोटीश्वरं
जगत्त्रयविभास्वरं प्रवरतापसाधीश्वरः ॥ १५ ॥

ततोऽयमधिकुम्भकाश्यपि ननाम कुम्भेश्वरं
जघान च वृकोदरः स खलु यत्र कुम्भासुरम् ।
ततो वसुपुरं गतो बुधनुतो यतीनां पतिः
तुतोष वसुचक्रवर्त्यभिकनिर्मितैः कौतुकैः ॥ १६ ॥

प्रणन्तृजनमङ्गलं परशिवं महालिङ्गम-
भ्युपास्य वरिवस्यया प्रचुरशिष्यनृणां बभौ ।
चचार बलकूरगं स्वकमठं गभीरो मुनिः
समागतमहाजनान् भृशमतोषयद्भाषणैः ॥ १७ ॥

जवेन सलिलाध्वना सुपमगङ्गवल्लीपुरं
समङ्गल उपागतोऽभजत साधु विश्वेश्वरम् ।
वरे किरुमुनीश्वराभिधपुरे तमभ्यर्चयन्
चिरात् सुरनरेष्टदं मुनिनुतं महान्तं गुरुः ॥ १८ ॥

जगाम मुनिपार्थिवस्तदनु चारु वैदूरम-
प्यगाद्वटकलं पुरं पटुकलानिधिः श्लाघितः ।
अपोषयदुपागतान् तदनु बालकन्यापुरा-
दतोषयत देवता द्विजसुभोजनैः पूजनैः ॥ १९ ॥

स यत्र नगरे महत्यमितकामितार्थप्रदो
मृकण्डुतनुसंभवेप्सितदपञ्चलिङ्गेश्वरः ।
विराजति वरागता अपि च रुद्रकन्याः सदा
विभान्ति रसवापिका शिवगणाश्च सर्वेष्टदाः ॥ २० ॥

विराजतितरां तथा प्रथितभूतपाण्डिस्थिरा-
वरस्थिरविभासनं परतरं च सिंहासनम् ।
तदर्पितमुपायनं बहुधनं समादाय तान्
मुदैष ददाशिषं मधुरभाषणः प्रैषयत् ॥ २१ ॥

ददर्श मुरुडेश्वरं तदनु निर्गतस्तत्पुरे
गणेशकपटक्रियाकुपितरावणेन क्रुधा ।

उदस्तमथ लिङ्गं वसनमेव लिङ्गात्मकं
समाविरभवत्तरां तदधुनापि यत्राच्र्यते ॥ २२ ॥

तमेष समपूजयद्विभवमान्यहोन्नावरा-
भिधाननगरीं गुरुर्गुणविराजमानो ययौ ।
ततो धनिकमानितं पुरमियाय धारेश्वरो-
षितं तमभजत्पुराकथितलिङ्गसल्लात्मकम् ॥ २३ ॥

स तत्र समवैक्षत प्रणतशारदः स्वभ्रम-
प्यथो करतलस्थितस्वककपोलसीमन्तिनी ।
उपेत्य न विलम्बनं कुरु चराचिरं स्वां पुरीं
त्वमित्यवददर्थमप्यधिमनः प्रबुद्धो न्यधात् ॥ २४ ॥

अथायमघनाशिनीं वरधुनीं समुत्तीर्णवान्
उपागतनृपालकाधिकृतमन्त्रिभिर्मानितः ।
समस्तबुधवर्णितः कुतुकपूर्णगोकर्णम-
प्यगाद्भुवनपावनो बहलशिष्यसंभावनः ॥ २५ ॥

महामहिमभृद्दयाकरमहाबलेशं हरं
महामतिरपूजयद्गुरुवरो महाभाग्यदम् ।
महाविभवकारितोपचरणैश्च पञ्चामृतैः
फलैर्बहुविधैर्जलैः कृतमहाभिषेकोत्सवम् ॥ २६ ॥

सहस्रवरनामभिर्बहुविधैश्च बिल्वीदला-
न्यनेककुसुमोत्करानपि तिलान्वितानक्षतान् ।
समर्प्य विनिवेदयन् विविधमन्नमारात्रिका-
वलीमपि च दर्शयन्नमृततत्पद्योतिराट् ॥ २७ ॥

महोत्सवमकारयद्धहलदीपिकाराधनैः
महारथविहारणैर्महितगीतवाद्यादिभिः ।
महीविबुधभोजनैर्महिमनिर्भरोद्भासितुः
महाबलमहेशितुर्महनकौतुकी मौनिपः ॥ २८ ॥

मुनिः समत्रगाहनं प्रतिदिनं वितन्वन्नयं
समस्तजनपावने सनियमं नदीवल्लभे ।
व्यधत्त वरदक्षिणोत्तरदिशोश्च यात्रे कृती
ततस्तत उपासिता सकलदेवताः सादरम् ॥ २९ ॥

ततः समहीयतानुपमहेमरेखामय-
स्फुरद्रुचिरलिङ्गगां समवलोक्य मूकाम्बिकाम् ।
अनेकमुपचारमप्यथ समर्प्य पूर्णादरः
उपार्थयत भूपतेः सुविभवाभिवृद्धिं मुनिः ॥ ३० ॥

अकार्यत रथोत्सवो मिलितलोकहर्षावहः
परश्शतसुवासिनीविततये दुकूलार्पणम् ।
यथेष्टमपि भोजनं श्रितजनेष्टदेनामुना
व्यधाप्यत बहुव्ययस्त्रिभुवनाम्बिकाप्रीतये ॥ ३१ ॥

पयोनिधितटायनं समतियाति मौनीश्वरे
समागमनमस्य तद्विभविनो रिपूणां मुखात् ।
विदन्नथ दुराशयोद्भटभृदन्तरीपाधिपो
विधित्सुरपि लुण्ठनं द्रुतमियाय होन्नावरम् ॥ ३२ ॥

विचार्य स मुनीश्वरं तमवलोकिता तत्पुरे
महाधनवतां धनान्यपि वधूः खलोऽपाहरत् ।

ततोऽपि पुर आगतो बहुवसद्वुपाख्ये पुरे
व्यलुण्ठयदयं शठः प्रतिमठं यतीनां मठात् ॥ ३३ ॥

निशम्य तमुदन्तमप्यथ नितान्तमाकस्मिकं
महान् केलदिभूमिपो यतिपताविह प्रीतिमान् ।
अमुष्य सविधेऽद्भुतं कमपि सेवकं प्राहिणोत्
समस्तकुशलस्थितिं कलयितुं ददत्पत्रिकाम् ॥ ३४ ॥

स तत्र समुपागतोऽखिलमुदन्तमाख्यात्तदा
निशम्य गुरुपुङ्गवः प्रहितवान् स्विकां पत्रिकाम् ।
वयं सुखमिहागताः स्वजनिनोऽनुमूकाम्बिकं
भवद्भिभववर्धनार्थिन इति स्फुरल्लेखनाम् ॥ ३५ ॥

अवेत्य कुशलागमं विततपत्रिकालेखनात्
यतीशितुरतीव तं परिषदि क्षितीशो मुदा ।
कथं खलु भवेच्छ्रमः सततमिन्दुमौलेः पदे
धिया सुभजतो मुनेरिति तदाऽकरोच्छ्लाघनम् ॥ ३६ ॥

जगाम सुषमं मठं निजमथैष हालाडिगं
परं नरहरिं महोपचरणैस्ततोऽमूमुदत् ।
द्विजप्रवरभोजनैः प्रचुरदीपिकाराधनैः
पुरं जिगमिषुः स्वमाश्वधिरुरोह यद्दं मुनिः ॥ ३७ ॥

अनेकमणितोरणैः प्रतिगृहाग्ररम्भागणैः
समुद्यदुपमेरुभिर्विततमेरुभिश्चारुभिः ।
स शृङ्गगिरमाययावथ समन्ततोऽलङ्कृतं
जनैः समभिनन्दितो बहुलवन्दिभिर्वन्दितः ॥ ३८ ॥

पुरा गुरुतपोभृता मतिमताऽर्धमाधापितां
विलोचनविनोदिकां रजतराजितान्दोलिकाम् ।
विचित्रशुकशारिकां विततमल्लिगुच्छालिकां
महाचतुरशिल्पिभिः स्फुटमतन्द्रितोऽपूरयत् ॥ ३९ ॥

अथष दिवसे शुभे द्विजवरालये भोजनं
विधाय समभीप्सितं कनकवर्षणैर्हर्षणः ।
पुरे सहृदयो गुरुः समधिरुह्य वीथीषु तां
विहृत्य जनचक्षुषां सफलतां नितान्तं व्यधात् ॥ ४० ॥

अथो कतिपयान्यहान्यधिवसन् वरां स्वां पुरीं
समस्तपुरदेवताः परिचरन् स्वपूर्वाधिकः ।
महामुदित एकदा महितसच्चिदानन्दराट्
ततो विनिरियाय दिग्विजयकेलियात्राकृते ॥ ४१ ॥

अथ स्वनगरागमं समवगम्य संतोषिणः
समस्तवरणाधिपा बहुतरैर्भटैः शोभिताः ।
प्रशस्तहरदत्तमुन्यभिमताश्रमासन्नगाः
स पुष्पफलपाणयः समुपजग्मुरेनं मुनिम् ॥ ४२ ॥

स तुङ्गहृदयो ययौ तमधितुङ्गभद्रातटं
रथोत्सवमकारयत् त्रिभुवनेशरामेशितुः ।
अमानयत मौनिराडपि सहस्रलिङ्गेश्वरं
सुधीनिवहसेवितः सकलभूपसंभावितः ॥ ४३ ॥

वराहजतरङ्गिणीयुगलसंगमक्षेत्रम-
प्ययादथ मुनीश्वरो धरणिमण्डलीभास्वरः ।

समीपवरणागतैरयुतसंख्यपादातिकै-
विंनीतनृपपूरुषैः प्रथितपौरुषैरन्वितः ॥ ४४ ॥

पुरोक्तमठवासकृत् किल यतिर्मठं रक्षितुं
परावनिपतेर्भटान् स्वत उपार्थ्य चायापितान् ।
इतो भृशमुपायतो जनितभीश्चिरं पालयन्
स तैः परिवृतस्तदा वरमठान्तरेवावसत् ॥ ४५ ॥

अथैष वरणाधिभूरनभियात् दुर्वृत्तकं
तदीयजनमीक्षिता बलयुतः शशास द्रुतम् ।
निशम्य तमुदन्तकं वसवभूपसूनुर्नृपः
प्रकुप्य बहुदण्डैरग्रहमतो नयज्ञोऽकरोत् ॥ ४६ ॥

स तीर्थमवगाह्य तद्यतिवरो जयी सर्वतः
समग्रपुरदेवताः सुमहनेन संभावयन् ।
यथारुचितभोजनैर्धरणिनिर्जरान् प्रीणय-
न्नुदारतिलको मुनिः प्रनिरगात्ससैन्यस्ततः ॥ ४७ ॥

स भैरवगिरिं ययौ यवनराज्यविभ्राजितं
महाबलपतिव्रजैरनुचरैर्महैश्वर्यवान् ।
समार्चयत भैरवं प्रणतविद्विषां भैरवं
चिराय तप आचरत्परमधैर्यगाम्भीर्यवान् ॥ ४८ ॥

स तत्र वसतां नृणां कलितचित्त आचार्यरा-
डगात्सपदि संगमाभिधपुरं महासैन्यवान् ।
जनान् बहिरकारयत् कतिपयांस्तदीयान् शठान्
चिरेण शरणागतान् समुददीधरत्साधुहृत् ॥ ४९ ॥

अगाद्द्रुमभूमिभृत्तनयपाल्यवल्लीपुरं
विदूरमभिगच्छता स बहु तेन संप्रार्थितः ।
अतीव सममानयद्गुरुयतीन्द्रमत्यादरात्
स वृत्तिभुवमर्पयन् सविनयं ततः प्राहिणोत् ॥ ५० ॥

स सोमपुरमाययौ समवलोक्य सोमेश्वरं
त्रिमूर्तिमयभास्वरं हृदि विकस्वरं ध्यायताम् ।
अनेकमुपचारमप्यथ विधाप्य मौनीश्वरो
द्विजप्रवरभोजनाद्यपि च तन्मुदे संव्यधात् ॥ ५१ ॥

तरीकेरेपुरीपतेर्नयधुरीणभूमीपतेः
निदेशत उपागताः सचिवपुङ्गवाः सद्गुरुम् ।
प्रणम्य विनयान्विताः स्वपुरमेतुमभ्यार्थयन्
उररीकुरुतार्थितं भजकवर्यदाक्षिण्यवान् ॥ ५२ ॥

तरीकेरेपुरीं गतस्तदधिपेन चाभ्युद्गतो
विदूरमधिकादरं ससचिवेन सेनावता ।
समध्यवसदर्थितः प्रविततोपकार्यामठं
महानगरभूषणो मतिमदोघसंतोषणः ॥ ५३ ॥

बलौघशुभयाधिपः प्रथितपातुशाहाश्रितः
प्रतापविजयोच्छ्रितश्चरणदर्शनाकाङ्क्षया ।
उपेत्य करमर्पयन् बहुधनं व्यनंसीदमुं
स्वकीयजनुसार्थकीकृतिमतीव विज्ञापयन् ॥ ५४ ॥

पुराधिपतिना पुरा प्रचितवैमनस्योऽप्ययं
तदा प्रणयमप्युरर्यकृतै(त चै)तदर्थं स्वयम् ।

अदाद्वहुधनं भुवं पुरपतिः प्रतोषादसौ
स चापि करभाग्रियं विजयदुन्दुभीवाहनम् ॥ ५५ ॥

अकारयत संभ्रमाद्गुरुवरस्य भिक्षां परा-
मवारयत पातकं सपदि पूर्वजन्मार्जितम् ।
अयाचत कृताञ्जलिः स्वकुलवृद्धये पुत्रम-
प्यदाच्च तमयं वरं तनयवान् स जातोऽचिरात् ॥ ५६ ॥

श्रीमत्पट्टाभिरामाभिधनृपतिवरात् प्राप्य मानाननूनान्
दूरं सेनायुतेन प्रहित उपयता शिष्यसंतोष्यथैषः ।
मार्गे मार्गे जनानामुपचरणभिदा आददन्मोदमानः
शृङ्गेरीं प्राप तुङ्गां निखिलनयनसंतोषिणीं तोरणाद्यैः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यादिबिरुदावलीविराजित श्रीमन्नृसिंहभारती करकमलसंजातसकलविद्याविशारदपंडितपुण्डरीकमण्डलीमार्ताण्ड श्रीसच्चिदानन्दभारतीमुनीन्द्रनिर्मापिते विद्वद्बालकलक्ष्मणशास्त्रिविरचिते श्रीगुरुवंशे महाकाव्ये चतुर्दशः सर्गः ॥

---

## ॥ विशेषसूचना ॥

### ( चतुर्दशसर्गे )

श्लो० १ — इदानीं उप्पिनियंगडितालुकास्थं 'बेल्लारे'नामकं स्थलमेव तदानीं कोङ्कणदेशस्थं वेलापुरमासीत् इति भाति ।

नेरङ्किपुरी — अधुना हलेनेरङ्कि इत्युच्यते ।

श्लो० २ — लवणापणपुरी—इयमेवेदानीं 'उप्पिनियङ्गडि' इति व्यवह्रियते ।

श्लो० ७ — कुड्डपपुरं—कडप ।

श्लो० ८ — कुक्यपुरी—कुक्के ।

श्लो० १० — मञ्जुनाथालयः कदिरिक्षेत्रे वर्तते ।

श्लो० १२ — उप्पिनियङ्गडितालुकाविद्यमानस्य कस्यचन भागस्य तदानीं चौटभूमिरिति व्यवहारः ।

श्लो० १३ — हेब्बुरीराजानः बल्लालाः इत्युच्यन्ते ।

श्लो० १३, ३७ — हालाडिनगरे शृङ्गेरीश्रीजगद्गुरु संस्थानस्य मठः आसीत् इत्ययमंशः वाचकैरवधेयः ।

श्लो० १६ — कुम्भकाशी—कुम्भाक्षी ।

श्लो० १८ — गङ्गवल्लीपुरम्—गङ्गोलि । पाश्चात्यवणिजः अस्य 'कञ्चोलिन्' इति नाम्ना व्यवहारमकुर्वन् ।

श्लो० १९ — बटकलपुरम् — बटकल ।

बालकन्यापुरम् - बार्कूर ।

अत्रापि शृङ्गेरी श्रीजगद्गुरुसंस्थानस्य स्वीयो मठः आसीत् ।

श्लो० २३— होन्नावरा – होनावर ।

श्लो० ३२–३३— अत्र वर्ण्यमानः द्वीपाधिपः अभिसीनियादेशादागतः सामुद्रतस्कराधिपः । अयमेव जञ्जिरादुर्गाधिपः 'सीद्धिसत्' इति भाति ।

श्लो० ४४–४५— सङ्गमक्षेत्रमेव 'कूडली' इत्युच्यते । अत्र विद्यमानः संन्यासी कूडलीमठाधिपः । शृङ्गेरी श्रीजगद्गुरुसंस्थानस्य शाखामठोऽयं कूडलीमठः ।

श्लो० ४६— बसवराजसूनुः सोमशेखरः ।

श्लो० ५०— वङ्कीपुरमिदानीं भद्रावतीत्युच्यते । इयमेव हनुमभूपस्य राजधानी ।

श्लो० ५२— तरिकेरे पुराधिप एव पट्टाभिरामः ।

श्लो० ५४–५६— अत्र वर्ण्यमानः सेनाधिपः शिरा प्रदेशपालकमोगलायराजप्रतिनिधिः ।

---

# NOTES

V 1. This Vēlāpura in Kōṅkaṇ is probably Bellare (Uppiṇiaṅgāḍi Taluk)

Nereṅki is modern Halenereṅki.

V 2. Lavaṇāpaṇapuri is Uppiṇiaṅgāḍi.

V 7. Kuḍupapuri is Kaḍapa

V 8. Kukyapuri is Kukke.

V 10. Mañjunatha is in Kadri.

V 12. Chauta Chiefship comprised part of Uppiniaṅgāḍi Taluk.

V 13. The Chiefs of Hebri were known as Ballalar.

VV 13, 37. Note that the Śringēri Samsthānam had its own maṭha in Hālāḍi.

V 16. Kumbhakāśi is Kumbhākshi.

V 18 Gaṅgavallipura is Gaṅgoli also called Cambolin.

V 19 Vaṭakalapura is Bhaṭkal.

Bālakanyāpura is Bārkūr where also the Sriṅgēri Samsthānam had its own maṭha.

V 23. Honnāvara is Honāvar.

VV 32-33. The reference here is probably to the Abyssinian pirate chief the Siddi Sat of Jañjira who was a terror to the people of the west coast.

VV 44-45. Saṅgamakshetra is Kuḍli, and the yati there is the acharya of the Kudli Maṭh, a branch of Sringēri.

V 46. Basava's son is Somasēkhara.

V 50 Baṅkipura (modern Bhadrāvati) was the head-quarters of the chief named Hanuma.

V 52 Paṭṭabhirama was chief of Tarekērē.

V 54, 55-56. The reference here is to the Moghul Governor of Sira.

## पञ्चदशः सर्गः ॥

---

पूर्णश्रीः कतिचिद्दिनानि निवसन् श्रीशृङ्गपुर्यां मठे
गोकर्णेशविलोकनाय निरगात् सूर्यग्रहेऽथैकदा ।
मार्गे पावयिता जनानगणितान् मार्गप्रदर्शी गुरुः
क्षेत्रेष्वाचरिता तपांसि विबभौ छात्रैश्चरिल्लोन्नतः ॥ १ ॥

गोकर्णं स जगद्गुरुः समगमद्द्राक् पौषमासे ग्रहे
मार्तण्डस्य सदापि पुण्यचरितेष्वासक्तिमान् भक्तिमान् ।
साक्षात्कृत्य महाबलेश्वरमयं प्रेक्षानतां पोषणे
दीक्षावानथ वारिधेस्तटमगात्तं प्रेमवान् प्रैक्षत ॥ २ ॥

पुत्र्या यस्य पतिर्महान् मुररिपुर्लोकाम्बिकाऽप्यात्मजा
तज्जातः स पितामहोऽपि तनयः शम्भोः शिरोभूषणम् ।
तारा यस्य वराः स्नुषाः सुरगणायादान्मुदा यः सुधां
योऽकार्षीद्गजराजदानममरेन्द्रायाश्वदानं तथा ॥ ३ ॥

यत्प्रीता द्युनदी पुनाति भुवनं भव्यो यतोऽभूद्वरो
धेनुः कामदुधा तथा यदुदिता यच्छन्त्यभीष्टं द्रुमाः ।
गम्भीरो रसिकाग्रणीर्जयति यः पूर्णः कुटुम्बश्रिया
सक्तो धीरतरङ्गिणीभिरनिशं प्रेम्णागताभिः स्वतः ॥

दातॄणां महतां सुपद्धतिमिमां स्वाभाविकीं दर्शयन्
सद्रत्नाकरतामवाप्य विदधद्रत्नाकरान् स्वाश्रितान् ।
यः सांयात्रिकरूपदूतमुखतः सर्वेष्टदायी च यः
श्रीरामादिमहात्ममानितरमः प्रीत्याह्वयत्यूर्मिभिः ॥ ५ ॥

संतोषादवगाह्य तापसवरो नित्यं विनिर्वर्त्य च
क्ष्मादेवान् परितोषयन् बहुधनैस्तत्राश्वदानं व्यधात् ।
यात्रायुग्ममथो विधाय सकलान् देवांश्च संभावयन्
तत्रत्यैरधिकारिभिश्च महितश्छात्रान् बभौ पावयन् ॥ ६ ॥

निर्गच्छंस्तत एव विश्रुतपुरादारुह्य घट्टं महा-
धैर्यश्रीविलिगेपुरादिषु महीपालादिभिर्मानितः ।
आनन्दं जनयन् यशोभरसितामारूढ आन्दोलिकां
संद्रष्टुं मधुलिङ्गमीशरजनौ श्रीगुप्तिदुर्गं ययौ ॥ ७ ॥

कारुण्याम्बुनिधिं स तत्र विनमन् श्रीरेणुकादेवतां
संपूज्याधिकमुत्सवं विरचयन् भक्तेष्टदायाः सदा ।
श्रुत्वाऽऽकस्मिकमप्युपप्लवभरं श्रीवानवासीपुरं
यातुं धीरमनाः शिवैकनिरतस्तस्मात् प्रतस्थे मुनिः ॥ ८ ॥

आगच्छत्सु कुटुम्बवत्सु बहुषु स्राक् कांदिशीकाशये-
ष्वात्तेषु प्रणिवारयत्स्वपि भृशं सामीपिकेषु स्वयम् ।
धैर्येणैष भटालिभृन्नवनिधिप्राकारपालान्वितः
सर्वांस्तान् विनिवर्त्य धावनपरान् श्रीवानवासीमगात् ॥

तद्देशेशसदाशिवक्षितिभृता संरक्षितुं तत्पुरी-
माज्ञप्तैः सचिवोत्तमैरभिगतैर्दत्तोपदैरर्थितः ।
गत्वा तां वरदां मुनिर्वरनदीं स्नात्वाचरन्नाह्निकं
प्रख्यातं मधुलिङ्गमीशमधिकं हर्षाद्विलोक्यानमत् ॥

भव्योऽसौ शिवरात्रिपुण्यदिवसे धन्याहृतैर्वारिजैः
संफुल्लैरयुताधिकैरगणितैर्बिल्वीदलैः कोमलैः ।

संपूज्येशसहस्रनामनिवहैः सन्मङ्गलारात्रिकै-
र्नीराज्योत्सवमापयन् परशिवं धीरैः समस्तूयत ॥ ११ ॥

निर्गत्याध्वनि मानितः स केलदीमागात् प्रसिद्धां पुरीं
तत्राभ्यर्च्य नमद्वरप्रदकरं रामेश्वरं भास्वरम् ।
काम्यार्थान् तदधीशितुः प्रददतं श्रीवीरभद्रं च तं
विद्यासागर आप सागरपुरीं संपत्करीं पश्यताम् ॥ १२ ॥

इक्केरीवरणाधिपेन चरणाम्भोजेक्षणाकाङ्क्षिणा
भूयः सोऽर्थित आगतोऽमहयतोत्साहादघोरेश्वरम् ।
आरङ्गं नगरं गतोऽथ कलिनाथेशं महालिङ्गम-
प्याराध्य द्विजवर्यपूज्यचरणोऽराजत्तपोराज्यभृत् ॥ १३ ॥

आगत्योत्तमतीर्थराजनगरीं श्रीतुङ्गभद्रासरि-
त्याधायाप्यवगाहनं शुभघनं छात्रान् समानन्दयन् ।
आगाच्छृङ्गपुरीं स मङ्गलकरीं ज्ञानी भवानीपतिं
भक्त्यालोक्य च शारदां कुशलदामर्चन्नदेदीप्यत ॥ १४ ॥

पूर्वेभ्योऽप्यधिके गुरौ सुचरिते पुर्यां बहूनुत्सवान्
आर्येऽस्मिन् प्रविधापयत्यनुदिनं कीर्त्यर्जनैकोत्सुके ।
संप्राप्ते नवरात्र उत्सवमिह श्रीशारदायाः प्रियं
संप्रीत्याऽन्वहकारितं कथयितुं शेषोऽपि नाशेषवाक् ॥

शारद्यां प्रतिपद्यथैष उषसि श्रीतुङ्गभद्राजले
स्नात्वा स्वाह्निककृत् सहानुगजनैर्वीक्ष्यो मठान्तर्गतः ।
नानादेशसमागतान् स्थलसदोऽप्याकारयन् सद्द्विजान्
संपर्यैक्षयतादिनेऽपि निगमे सूक्तादिजाप्येषु च ॥ १६ ॥

एत्यायं पटुतालशङ्खनिनदैः श्रीशारदामन्दिरं
प्रापय्योत्तमपुस्तकानि पुरतो मन्त्रैः प्रतिष्ठाप्य ताम् ।
वाग्देवीं विधिवत्समर्च्य विविधैः श्रीगन्धपुष्पादिभिः
भूयारात्रिकदर्शनैः प्रमदयन् दत्ते वरोपायनम् ।। १७ ।।

भूदेवेभ्य उपागतेभ्य उचितं वेदादिपारायणं
प्रारब्धुं विविधान् मनूंश्च जपितुं केरं प्रदत्ते वरम् ।
तद्धोषश्रवणेन दैवतगणाः श्रीशारदाम्बेक्षणा-
यागच्छन्त्यपि येन वाक्पतिमुखास्तं साधु शंसामि किम् ।।

यच्छत्येष सुवासिनीसमुदयायैकैकवृद्ध्याऽम्शुका-
न्यह्नयह्नीप्सितभोजनं बहुनृणामाधापयत्यादरात् ।
रात्रौ सर्वसमागतद्विजवरानाकार्य सिंहासना-
सीनः सन् प्रविधापयत्यतितरां वाण्या विचित्रोत्सवान् ।।

सद्वासांसि नवाह्नि वासयति तामाद्ये द्वितीयादिषु
स्वारूढां क्रमतः समाकलयते हंसे वृषे बर्हिणे ।
पक्षीन्द्रे हरिणे हरौ च तुरगे स्तम्बेरमे शारदा-
मालोक्यानुदिनं कलोपचयिनीं नालं दृशौ मन्वते ।। २० ।।

मूलर्क्षे खलु मल्लिकार्जुनवधूं मान्यां भवान्यम्बिकां
खार्जूरीमधिरोह्य चारुशिबिकां श्रीशारदाया गृहे ।
आनीयाभ्युपवेश्य पूजयति ते भक्त्या महादेवते
विद्याष्टादशकेऽपि पुस्तकचयानर्चन् स्तुते शारदाम् ।।

आसीना कमलासने विलसिता हासाननोल्लासिनी
वासोभिः प्रतिवासरं बहुविधैर्भास्वद्भिरुद्भासिता ।

रत्नाढ्याभरणैः सुवर्णवपुषा नूत्नेव नित्यं दृशोः
सैषा मद्वदने सदा निवसतु श्रीशारदादेवता ॥ २२ ॥

वक्त्रेणाम्ब सदा मुदा विकसता श्रीशारदादेवि ते
सादृश्यं सहसाप्तुमेव कमलं तोये विधत्ते तपः ।
लोलः सन्ततचिन्तयैव विकलश्चक्षीयते चन्द्रमा
आदर्शः सदृशो भवेद्विमलतां स्वाभाविकीं चोद्वहेत् ॥

मुद्रा किं तव शारदाम्ब वदने लावण्यराशाविय़ं
न्यस्ता वल्लभवेधसा किमथवा शृङ्गारवल्ल्यङ्कुरः ।
अङ्कः किं वदनेन्दुबिम्बनिलयः सौभाग्यशोभाकरं
कस्तूरीतिलकं पतिं वशयितुं किं भाति रेखाञ्जनी ॥

भक्तस्तोमसदाविधेयकरुणाराशेर्निवासाय ते
वैशाल्यं कलयामहे नयनयोः वाणि प्रसन्नानने ।
मीलद्भ्यां दिवसे वदाम उपमां नीलोत्पलाभ्यां कथं
तादृग्भ्यां रजनौ नितान्तसमुयोः पङ्केरुहाभ्यामपि ॥

चारुश्रीकर शारदाम्ब भवतीं भक्त्या सतां ध्यायतां
आसन्नागमनात्पुरैव सकलं सिध्यत्यभीष्टं ततः ।
दुग्धाम्भोनिधितुङ्गभङ्गतुलिताः प्रौढाः कटाक्षच्छटाः
प्रेम्णा तेषु चिरं पतन्ति परमाह्लादप्रसादप्रदाः ॥ २६ ॥

विद्याष्टादशकद्विभागकरणादर्धद्वयं पार्श्वयोः
वाग्देव्यम्ब नवाङ्करूपकलिते रेखे ध्रुवं ते श्रुती ।
द्रष्टुं तन्निकटाश्रिते विलसतो दीर्घे विशाले दृशा-
वाकर्णान्तविकृष्टमन्मथशरौ यद्वा विश्वमोहने ॥ २७ ॥

तारा भान्त्ययि शारदाम्ब भवतीताटङ्कमुक्ता इमाः
प्रेम्णा सन्निहितो हि तासु रमणश्चन्द्रः कपोलात्मना ।
एवं पार्श्वयुगेऽपि राजतितरां सौभाग्यशोभावहं
चिन्हं तद्वरवर्णिनीसुविलसच्चूर्णानुलेपोऽनिशम् ॥ २८ ॥

श्रीवाग्देवि तवानने नवरसेष्वन्योन्यसंस्पर्धया
संपृक्तेषु विभासते सुललिते मुख्योऽथ हास्यो रसः ।
कर्णद्वन्द्वगता रसास्तदितरे ताटङ्करत्नात्मना
सोऽयं तत्र पुरः स्फुरत्युरुतरो नासाग्रमुक्तात्मना ॥ २९ ॥

अभ्याशं समुपागतः सुकविताभ्यासाय शुक्रोऽथवा
दन्तान् दाडिमबीजपङ्क्तिरुचिरान् दृष्ट्वा समागच्छतः ।
श्रीवाग्देवि शुकाग्रियस्य सहसा चञ्च्वग्रविभ्राजितं
लोलं तल्लवलीफलं लसति किं नासाग्रमुक्तामणिः ॥ ३० ॥

श्रीवाग्देवि समं त्वदीयमधरं जानामि केनाम्बिके
यस्मात् क्वापि न भासते तदुपमा बृन्दारकैर्वन्दिते ।
बिम्बे नो मतिमान्द्यकारिणि तथा नो पल्लवे पल्लवे
नैवोत्तेजनभाजि विद्रुममणौ विज्ञानभाग्यप्रदे ॥ ३१ ॥

सौन्दर्येन्दिरया सुवाक्यसुधया भ्रूकल्पवल्ल्या रदैः
मुक्ताल्याऽधरविद्रुमेण लसता ताटङ्कशुभ्रांशुना ।
सीमन्तस्थितरत्नकौस्तुभरुचा दृष्ट्या सुरभ्या कला-
वीचीभिर्वदनं सुधाम्बुधिरिव श्रीशारदे भासते ॥ ३२ ॥

धीदानं मतिमुद्रया करजुषा विद्यार्पणं पुस्तके-
नोत्तुङ्गाक्षवरस्रजेष्टगणना पीयूषकुम्भेन तु ।

भक्तानां परिपोषणान्यविरताभीष्टार्थदानं ध्रुवं
पद्भ्यामेव धृतं त्वया निरुपमे वाग्देवि तुभ्यं नमः ॥

स्तुत्वैवं चतुरग्रहारगमहीदेवालयेऽन्वालयं
योषिद्भ्यश्च कुमारिकाभ्य उरुणा हर्षेण तत्प्रीतये ।
वासांसि प्रददद्यशांसि कलयन् भूयांस्यथो सच्चिदा-
नन्दश्रीगुरुराज एष नितरां प्रोज्जृम्भते संभ्रमी ॥ ३४ ॥

सोयं योगिवरो महार्हवसनान्यानाय्य नानाविध-
स्थानायातसुवासिनीसमुदयायानेकसंख्याय च ।
दायं दायमुदार एकसमये बालैः कुमारीभिर-
प्यालोक्याय ददाति तैलमपि चाभ्यङ्गाय तुङ्गाशयः ॥

होमान् कारयिता विधापितपुरश्चर्याविधिः पूर्त्तये
वाग्देव्याः स रथोत्सवं कलयते रम्यं दशम्यां भृशम् ।
चश्चोद्यच्छिबिकाधिरोहणमहाभव्योत्सवं प्रापयन्
संप्रीत्या नवरात्रगोत्सवकृती वर्वर्त्ति सत्कीर्त्तिमान् ॥

भास्वत्कार्तिकपूर्णिमावरदिने सल्लक्षदीपोत्सवं
संप्रीत्यै गिरिमल्लिकार्जुनविभोः भक्त्या विधत्तेऽभितः ।
नक्षत्रावलिमध्य इन्दुरिव सत्प्रह्लादयन् पश्यतो
दीपालौ द्विजराज एष नगरे हृद्योऽत्र विद्योतते ॥ ३७ ॥

पौरैस्तैः प्रतिमन्दिरं विनयिभिर्नीराजितो योगिराट्
वह्वाराात्रिकमारचय्य च मिथः संस्पर्धमानैर्जनैः ।
दीर्घायां ततसत्रशोभित ऋजौ दृष्ट्वा विपण्यां च तां
सिंहाद्यङ्करमन्दिरोपरिलसद्दीपावलीं प्रेक्षते ॥ ३८ ॥

विद्याशंकरमाकलय्य वरदं गृह्णन् प्रसादं ततो
वाग्देवीं महयन् महाजनयुतः सन्मङ्गलारात्रिकैः ।
नीराज्याखिललोकलोचनयुगानन्दी स वन्दीडितः
प्रौढैः श्लाघ्यकृतिर्मठान्तरयते श्रीसच्चिदानन्दराट् ॥

भक्तश्रीकरमल्लिकार्जुनविभोराधापयत्यूजितं
माघे मासि महोत्सवं मुनिवरः सोत्साहमत्युत्सुकः ।
तत्रैवं दशमीदिने रचयते कृष्णे ध्वजारोहणं
भक्त्या वैदिकतान्त्रिकैश्च पुरतः शम्भोर्भवान्या अपि ॥

विद्याशंकरमात्तसंभ्रम उपानेतुं वरान्दोलिका-
मारुह्य स्वमहोत्सवे क्षणकृते देवः स्वयं निर्गतः ।
माङ्गल्याक्षतदानपूर्वकमुपाहूयानयन्नादरा-
त्स्वे सद्मन्युपवेश्य कारयति चाशेषं प्रहर्षादयम् ॥ ४१ ॥

आयाताः शिवरात्रिपुण्यदिवसे नानास्थलेभ्यो द्विजाः
सल्लिङ्गात्मकमल्लिकार्जुनविभोः संपूजनं कुर्वते ।
द्रोणार्कादिभिरप्यसंख्यकुसुमैर्बिल्वीदलैः कोमलैः
सर्वस्तन्मय एव भाति स गिरिः किं वर्ण्यतां वैभवम् ॥

योगीन्द्रः पदगो निशीथसमये भक्त्योपगम्यालयं
तल्लिङ्गं शतरुद्रियादिपठनैः पञ्चामृतैः सत्फलैः ।
संस्नाप्याथ सहस्रनामनिवहैर्बिल्वीदलाद्यर्पयन्
नीराज्यापि समर्प्य पूजनभरं याति प्रतीतो मठम् ॥

सोऽयं कारयते रथोत्सवममावास्यादिने सादरं
कल्याणं खलु मल्लिकार्जुनविभोः साकं भवान्यम्बया ।

आधाप्याथ महाजनैः सह बुधैः सामाजिकैश्चाभितः
पुर्यां शोभयिता प्रवेश्य भवनं देवस्तया स्थाप्यते ॥ ४४ ॥

प्रातर्वन्दिजनैः प्रबोधनकरः शृङ्गारिचूडामणे-
स्तस्यारात्रिकमङ्गलानि घटयन् सोऽत्यन्तनृत्यादिभिः ।
सायं कारितकुंकुमोत्सवभरो भूयोविनोदोक्तिभि-
श्चान्दोलिकया विहारणकरो निर्वर्तयत्युत्सवान् ॥ ४५ ॥

एवं चारु सदोत्सवैर्बहुविधैर्निर्वर्तितैः कीर्तिमान्
धर्मान् पूर्वमुनीश्वराधिकतमो विस्तारतः कारयन् ।
वेदान्तार्थविचारणेषु निरतः श्रीसच्चिदानन्दराट्
संद्रष्टुं वरसोमशेखरमहोवीन्द्रं स चित्तेऽकरोत् ॥४६॥

एतस्याशयमीदृशं यतिपतेर्विज्ञाय विज्ञप्रियो
निर्वाणेऽथमहाप्रधानचतुरो व्यज्ञापयद्भूभुजे ।
आकर्णायतचक्षुषे तदुदितं प्राकर्ण्य सोपि प्रिया-
मात्यं कञ्चन सद्गुणं समुदयत्संप्रीति संप्राहिणोत् ॥

आयातः स यतीन्द्रमार्थयदमुं श्रीवंशपुर्यामुपा-
यातुं श्रीकरसोमशेखरनृपाख्यातादि विज्ञापयन् ।
अभ्याशं च तदाशयानुगुणधीरध्यास्य हृद्यश्चिरं
तं प्रास्थापयदादरात्प्रथमतो नागेन्द्रदेवालयम् ॥ ४८ ॥

प्राज्ञास्तं च महाजना अनुययुः सर्वेपि सामाजिका
हेमाद्रिं प्रति यान्तमीश्वरमिव प्रेमाढ्यदेवर्षयः ।
तस्मात्काशिपुरं समेत्य स ततो दुर्गं तदीशादृतः
प्राप्तो व्याघ्रशिलापुरं स मुनिराडध्यास्त हृद्यं मठम् ॥

श्रुत्वाऽऽयातममुं नृपानुमतिमन्मन्त्रीश्वरप्रेषिता
लोका द्रष्टुमथाययुर्मुनिपतेः पादाम्बुजे संभ्रमात् ।
रम्भाकेरलवङ्गजातिशशभृद्द्राक्षाफलीशर्करा-
खर्जूरैक्षवकुङ्कुमागरुलसत्पुष्पादिमत्पाणयः ॥ ५० ॥

आयातानखिलान्यथोचितमथो संभावयन्तं गुरुं
संतोषं दधते वसन्त इति गां श्रुत्वा वसन्तोऽभ्यगात् ।
आकर्ण्याब्दफलं प्लवादिमदिने सर्वैरमात्यैरसौ
दैवज्ञान् परितोष्य दानकुशलो लोकैः समश्लाघ्यत ॥

राजाज्ञामधियन् गजाश्वशिबिकारूढैरसंख्यैर्वृतो
मन्त्रीन्द्रः समुपेत्य तं स्वशिवगङ्गोद्यत्पुरं दर्शयन् ।
श्रीमांस्तत्र यथार्हमादरभरात्संभाव्य संभाषिता
योगीन्द्रं रमणीयवंशनगरीं प्रास्थापयच्चास्थया ॥ ५२ ॥

आलोकिन्युरुलोकलोचनयुगाह्लादी महावैभवा-
दुद्दामैर्दिनदीपिकादिविरुदैर्हृद्यैश्च वाद्यैर्युतः ।
घोषद्वन्दिजनैर्विशेषविलसद्गानैर्जनानन्दन-
श्रीमद्वंशपुरीं श्रयच्छुभकरीमुत्साहवान्प्राविशत् ॥ ५३ ॥

आनन्त्रीप्सितदानभास्वरतरं श्रीनीलकण्ठेश्वरं
प्रालोक्य प्रविनम्य चार्पितकरो नीराज्य चारात्रिकैः ।
आदायादरतः प्रसादकुसुमं देदीप्यमानः पुरे
प्रागाच्छ्रीमठमात्मनो जनघनं सभ्यैः सुसंभावितः ॥५४॥

श्रीमान् लोकगुरुस्ततः शुभदिने राजानमालोकितुं
प्रौढैरास्ततमैः परःशतबुधैः भूयस्तदीयार्थितः ।

वाद्यैर्हृद्यतमैरनेकबिरुदैः षड्दर्शनस्थापना-
चार्योऽयं निरगान्मठात्पुरनृणां दृग्राजिनीराजितः ॥

सौधं प्राप्य यथार्हमभ्यभियता राज्ञा समज्याभृता
नीतोऽन्तर्विरचितमण्डपमसौ रत्नामनेऽभासत ।
आसिष्टाथ स चाप्यमू प्रविनुतौ प्रभ्राजमानौ जनैः
सूर्येन्दू इव पार्षदावलिदृशां हर्षप्रदौ रेजतुः ॥ ५६ ॥

योगीन्द्रोऽकुरुत प्रसङ्गमधिकं मन्त्रीन्द्रसभ्यावली-
कर्णश्राव्यमुदारधीकेलदिराट्चित्ताभिरामं भृशम् ।
सर्वे ते विबुधाः शशंसुरपि तौ क्षोणीशमौनीश्वरौ
देवेन्द्राङ्गिरसाविवोर्जितगुणौ प्रेम्णा स्मितास्यौ मिथः ॥

युक्तज्ञोऽकृत सोमशेखरमहाप्राज्ञाय विज्ञापनं
भाति श्रीमठ एष भूमिवलये राजाधिराजादृतः ।
कालेऽस्मिन् बहु पर्युदञ्चनमभूद्वृद्धैर्विवृद्धैश्चिरात्
क्षिप्रं तत्परिहर्तुमादिश महोदारेति मन्त्रीश्वरः ॥ ५८ ॥

आकर्ण्यास्य वचो यशोर्जनपरः क्षोणीश्वरो गौरवा-
त्सर्वस्यापि ऋणस्य वारणमयं हर्षादकार्षीत्ततः ।
सन्मानैः समतोषयन्मुनिवरं प्रौढो यथार्हं भृशं
तोषादाशिष एष चादित ततः स्वीयं समागान्मठम् ॥

कौशल्यातिशयप्रदर्शनकरः स्वीयं वृषोद्यानम-
प्यागत्यार्य विलोकयाखिलमिति प्राचष्ट मन्त्रीश्वरः ।
अङ्गीकृत्य ततोऽगमद्वृषवनं पश्यज्जनानन्दनं
मौनीशः समलोकयत्सुवमं वृक्षैश्च लक्षाधिकैः ॥ ६० ॥

पद्मामन्दिरपद्मवृन्दरुचिभृत्पद्माकरैरन्वितं
नूनं माघवनं वनं घनमिव प्रश्लाघ्यमानं जनैः ।
निर्वाणैयमहामना वृषवनं धीमानुपादर्शय-
त्सर्वत्रोपवने विचित्रकुतुकान्युर्वीतले ख्यातिमान् ॥

आरामेऽत्र महीरुहान् बहुविधानानाय्य संवापितान्
देशेभ्यो विपुलास्तथा कुशलहृन्मन्त्रीश्वरोऽदर्शयत् ।
आम्राशोकसुनारिकेलपनसप्लक्षेक्षुखर्जूरिका-
बीजापूरमधूकपूगवकुलश्रीवृक्षलोध्रादिकान् ॥ ६२ ॥

ताम्बूलीलवलीपटोलपटलीबिम्ब्येलकोर्वारुकी-
तुम्बीकर्कटिकालवङ्गविलसत्कूश्माण्डकोशातकीः ।
द्राक्षापिप्पलकारवेल्लिकमुखा वल्लीश्च सन्मल्लिका-
मालत्यौ गिरिकर्णिकापरिमिलत्कुन्दादिमाः सूनिनीः ॥

सर्वाः किंच सुगन्धिकाः सुमनसः शर्वार्चनार्हा वरा
दृष्ट्वा सुष्ठ्वथ तुष्टुवे मुनिवरस्तुष्टः शिवार्चोत्सुकः ।
एवं भूरिसरोवराणि सुचिरं नूनं दृगानन्दना-
न्यम्भोयन्त्रमनेकभेदमुदितं भूमण्डलेऽत्यद्भुतम् ॥६४॥

पद्माकारतया फणाकृतितया चित्रातपत्रात्मना
मुक्ताढ्यध्वजचामरात्मकतया स्वःस्पर्शिदण्डात्मना ।
लिङ्गाकारतया तरङ्गनिभया विष्वद्र्यगूर्ध्वोच्चल-
न्मुक्ताजालजजालकाकृतितया शुभ्रांशुखण्डात्मना ॥

एवं चारुबहुप्रकारकपयोयन्त्रैः समन्तात्स्थितैः
स्थानं नेदृशमस्ति निर्मलमिति श्लाघां भृशं कुर्वते ।

तस्मै दर्शितवान् तटाकमधिकश्रीकं च पोतं कृती
तद्वयापारिनृपुत्तलीरपि पयोराशाविवाश्चर्यदाः ॥ ६६ ॥

उद्याने जनिता नवाः सुमनसो हृद्यानि सन्मण्टप-
द्राक्षादीनि फलानि मौनिपतये हार्दाभिवृद्धादरः ।
दत्वा छात्रहितोपयोगिवचनं सर्वं तदीयं मुदे-
वाङ्गीकृत्य तथा मनागनुचलन् संप्रैषयत्तं प्रभुः ॥ ६७ ॥

भद्रश्रीरथ सोमशेखरनृपः सर्वैरमात्यैर्युतः
सैन्यैर्भूरितरैर्मठं गुणनिधिर्गत्वावलोकयाप्यमुम् ।
संमान्याधिकमादरेण कलयन् श्रीचन्द्रमौलीश्वरं
श्रीमच्छृङ्गपुराप्तयेऽनुमतिमप्याधत्त सान्त्वं वदन् ॥ ६८ ॥

श्रीमद्वंशपुरात्ततः स निरगात्संतोष्य सर्वान् सतो
दत्वाशीर्वचनं हितप्रदतमं छात्रव्रजेभ्यो मुदा ।
आकर्ण्यागमनं मुनेरधिकृता लोका अलञ्चक्रिरे
शृङ्गेरीनगरीं श्रितेप्सितकरीं शोभाजितस्वःपुरीम् ॥ ६९ ॥

भूदेवा निवसन्ति यत्र महिता वेदान्तविज्ञानिनो
विद्यास्वप्यखिलासु कोविदवरा उद्यत्तराचारिणः ।
सन्मन्त्रोरुजपादिभूरिनियमाः संमान्यमाना नृपै-
र्यागाद्युत्तमकर्मतत्परतमा भोगाढ्यभाग्यान्विताः ॥ ७० ॥

दत्ता देवगणैः सुकर्महर्षितैर्माला महीयोषिते
श्रीलात्युन्नतगोपुरेण तरलेनालोकनीया नृणाम् ।
विद्याशङ्करमन्दिरात्मकशिरोरत्नेन यत्रोज्ज्वला
श्रेणी राजति वेश्मनामनुपमा पार्श्वद्वयोद्भासिता ॥ ७१ ॥

विद्याशङ्करमन्दिरस्य शिखरस्तोमाग्रसंघर्षणो-
द्भूतेनेव भयेन वासरमणिर्भागं तदूर्ध्वं जहत् ।
नित्यं गच्छति दक्षिणोत्तरदिशोः किं द्वादशात्माऽभव-
त्स्वात्मातीतमहाप्रकाशशिखरैः षड्भिः सह स्पर्धया ॥

विद्याशङ्करगेहमुन्नततरं संप्रेक्ष्य संतर्कय-
न्त्यार्याः श्रीकरमल्लिकार्जुनगृहं पीनं समभ्युन्नतम् ।
शृङ्गर्यात्मकयोषितः स्तनयुगं श्रीतुङ्गभद्रात्मना
भात्यस्याः परिधानयोग्यमभितो धार्यं दुकूलं सितम् ॥

प्राविक्षद्गुणरङ्गशृङ्गनगरीं योगीन्द्र आनन्दभृ-
त्कण्ठालंकरणैः पुरश्रिय इव प्रद्योतितां तोरणैः ।
दृष्ट्वा स्वैर्वसनैर्हसद्भिरभितो नाकाधिपं केतुगैः
सेवायातकुलाचलैरिव नुतैश्चारूपमेरूत्करैः ॥ ७४ ॥

विद्वद्भिः सचिवोत्तमैरनुचरैः सद्वन्दिभिर्गायकै-
र्वाद्यैर्हृद्यतरैश्च तालनिवहैर्नृत्यद्भ्रुकुंसैरपि ।
पौरैः प्रेक्ष्यतरो जगद्गुरुमुनिश्रीसार्वभौमाग्रियः
स्मेरास्यो वरमल्लिकार्जुनविभुं हृष्यन्नपश्यत्तराम् ॥ ७५ ॥

संपूज्याधिकमादरेण यतिराण्नत्वा भवान्यम्बिकां
हेरम्बं समुपास्य संभ्रमयुतः प्रत्योक्ष आरात्रिकैः ।
मुक्ताजालविचित्रितैरपि मुहुर्नीराजनै राजितो
हर्षेण प्रविशन् मठं स्वमखिलप्रौढैः समश्लाघ्यत ॥ ७६ ॥

वाग्देवीं विबुधाग्रणीः प्रविनमन् सन्मङ्गलारात्रिकै-
र्नीराज्याभरणैर्विराजिततरां संपूज्य चित्ते चिरम् ।

सर्वान् साकमुपागतान् समुचितैर्वाक्यैः समाज्ञाप्य तान्
यातुं स्वस्वनिवासमादततरश्रीमान्मठेऽमान्यत ॥

आनीताभरणान्युगापनयनाद्द्राग्देवतानां महा-
पूजां साधु विधाप्य सैष गुरुराडत्यादरादर्पयन् ।
शिष्टान् भोजयिता मठे द्विजवरान् मृष्टान्नदानोत्सुकः
सर्वास्ताः पुरदेवताश्च महयन् प्रीतो विनीतो व्यभात् ॥

भक्त्याऽकारयदालयं वरगुरोः श्रीसच्चिदानन्दराट्
रम्यं श्रीनरसिंहनामकमुनेः सम्यक्शिलाचित्रितम् ।
प्रत्यष्ठापयदीशलिङ्गमुदितं सत्यं भजत्कामदं
तत्र स्फीतचरित्रचित्रितयशाः प्रीत्या मठाग्रस्थले ॥

नित्यं सच्चरितैकनिश्चितमनाः कीर्त्यर्जनात्युत्सुकः
प्रीत्या संभृतवेदशास्त्रकलितव्यासङ्ग आसक्तिमान् ।
प्राज्ञानां सुरभूरुहोपमगुणो राज्ञां किरीटावली-
रत्नैः पूज्यपदो जगद्गुरुरयं मोदेन देदीप्यते ॥ ८० ॥

जम्बूद्वीपस्य शोभा गुरुकुलविलसन्मालिकामध्यरत्नं
विद्याविद्योतिदीपः परमतविचरद्वादिमत्तेभसिंहः ।
राजद्राजाधिराजावलिमुकुटमणिः सच्चिदानन्दभार-
त्याख्यः प्रख्यातकीर्तिर्जगति विजयते योगिनां सार्वभौमः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यादिबिरुदावलीविराजित श्रीमन्नृसिंहभारती करकमलसंजातसकलविद्याविशारदपंडितपुण्डरीकमण्डलीमार्ताण्ड श्रीसच्चिदानन्दभारतीमुनीन्द्रनिर्मापिते विद्वद्बालकलक्ष्मणशास्त्रिविरचिते श्रीगुरुवंशे महाकाव्ये पञ्चदशः सर्गः ॥

## ॥ विशेषसूचना ॥
### (पञ्चदशसर्गे)

श्लो० ७— बिलिगे ; कस्यचन नृपस्य राजधानी ।

श्लो० ८— वानवासिपुरं, इदानीं 'वानवासि' इत्युच्यते ।

श्लो० १०— सदाशिवः ; वानवासिसमीपप्रदेशानामधिपः ।

श्लो० २० — शृङ्गगिरौ नवरात्रमहोत्सवसमये प्रतिदिनं श्री शारदाम्बिकां भिन्नभिन्नवाहनारूढां कल्पयित्वा अलंकुर्वन्ति । भक्तिसुधातरङ्गिण्यां ९९ पृष्ठप्रभृति श्रीशारदास्तोत्रे एतानि वाहनानि, तेषां तत्त्वार्थाश्च श्रीसच्चिदानन्दशिवाभिनवनृसिंहभारतीस्वामिभिः सम्यग्वर्णिताः ।

श्लो० ४६— सोमशेखरनायकः II; अस्य कालः १७१५–३९.

श्लो० ४७— निर्वाणय्या ; सोमशेखरनायकस्य अमात्यः श्वशुरश्च ।

श्लो० ५१— प्लवसंवत्सरः–१७२१ A. D.

## NOTES

**V 7.** Bilige-head quarters of a chiefship.

**V 8.** Vānavāsipura-Bānavāsi.

**V 10.** Sadāśivā-a local chief ruling the territory round Bānavāsi..

**V 20.** For a description of the vāhanas (mounts) on which Śri Sāradā is decorated during *navarātri*-see *Sri Sārada Stōtra* in *Bhakti Sudhā Taraṅgiṇi* pp. 99 ff Jagadguru Śri Śachchidānanda Śivābhinava Narasimha Bhārati Swami dilates upon the significance of each mount.

**V 46.** Sōmaśēkhara Nāyaka II. 1715–39.

**V 47.** Nirvāṇaiya father-in-law and minister of Sōmaśēkhara II

**V 51.** Plava year=A. D. 1721.

# षोडशः सर्गः ॥

समुदिते गुरुशीतकरेऽभवद्विकसितं जनलोचनकैरवम् ।
सुववृधे बुधहर्षमहाम्बुधिर्विमतचोरचयश्च पलायत [1] ॥ १ ॥

धवलिते यशसाऽथ गुरोः सदा हिमधरावधि सर्वमहीतले ।
उपगतः कृशतां शशलाच्छनो गतबलो भुवि कः परिवर्धते ॥ २ ॥

ज्वलति चास्य तपोबलपावके शलभतामलभन्त भयाकुलाः ।
विविधधर्मविघातविधायिनो विगतपक्षबलाः प्रतिवादिनः ॥ ३ ॥

वसु ददत्यनिशं गुरुपुङ्गवे प्रतिदिनं बहु विद्वदभीप्सितम् ।
बुधजना ववृधुश्च यथाऽमरा अभिमतं दिशति द्युमहीरुहे ॥ ४ ॥

विविधसत्वरान् सुचिकीर्षवः श्रुतिविदो बहुदेशसमागताः ।
गुरुवरेण कृतार्थतयाऽन्विता इह सुरा मघवन्तमिवास्तुवन् ॥ ५ ॥

दिशि दिशि प्रथिताः पृथिवीक्षितो विततमूर्जितमस्य गुरोर्यशः ।
निजशिरोधृतरत्नचयांकुरैरहरहर्मुदिताः समपूपुजन् ॥ ६ ॥

निजयशःप्रचयोद्यतपार्थिवाः प्रथितवाहनवस्त्रधनैः करैः ।
अमितभाग्यफलोदयकारणं गुरुमिमं सततं समतोषयन् ॥ ७ ॥

क्षितिपतिप्रहितैश्च महाधनैर्यतिपतिः समतुतूषदात्मवान् ।
सबहुमानमवर्धयदाशिषा पुनरिमान् रघुजानिव तद्गुरुः ॥ ८ ॥

निवसतश्चरितं सततं मुनेः प्रथितभृङ्गपुरे श्रुतवान्नृपः ।
बसवराजतनूज इहाकरोन्मतिमतीव समागमने ततः ॥ ९ ॥

* 'चोरचयोऽप्यपलायत' इति माध्यम् ।

सपदि मन्त्रिभिरात्महितार्थिभिः चतुरगैस्तुरगैश्च गजव्रजैः ।
पटुभटैः परिवारजनैर्वृतो नरपतिर्नगरादथ निर्ययौ ॥ १० ॥

निखिलजानपदोपदयार्चितः सुरभिशीतलगन्धवहादृतः ।
सरसनृत्तविनोदकुतूहलः परिससार पथि प्रमदान्वितः ॥ ११ ॥

अथ स कौरवदुर्गगवर्त्मना महिततीर्थपुरं च समासदत् ।
सरिदराजत यत्र वराहजा सकलपातकजातविघातिनी ॥ १२ ॥

सलिलकेलिविलासभरालसः कतिचिदत्र दिनानि विहृत्य सः ।
निजममात्यमचोदयदग्रतस्त्वमित एहि यतीन्द्रपुरं त्विति ॥ १३ ॥

श्रुतमहीन्द्रवचाः सह सैनिकैस्त्वरितमेत्य गुरोर्निकटेऽवदत् ।
बसवराजतनूज इहागतो भवदनुग्रहमीहत इत्यसौ ॥ १४ ॥

अथ निशम्य तदीयवचो गुरुः सपदि हृष्टमनाः समकारयत् ।
विविधवस्तुविचित्रितमन्दिरं सुपरिसृष्टमिवामरशिल्पिना ॥ १५ ॥

पुरवरं परितो ध्वजतोरणावलिविभूषितसौधमनोहरम् ।
उभयपार्श्वगृहावलिवेदिकाकदलिकावनराजिविराजितम् ॥ १६ ॥

सुरभिचन्दनतोयसुसिक्तभूतलसमुत्थसुगन्धसुवासितम् ।
परिजनोचितवासगृहान्वितं यतिवरः समभूषयदञ्जसा ॥ १७ ॥

अथ समन्त्रिगणः सबलो नृपः प्रथिततीर्थपुरान्निरियाय सः ।
पथि पथि प्रकृतीरनुरञ्जयन् सपदि शृङ्गपुरीं समयात्ततः ॥ १८ ॥

बसवभूपवरात्मजमागतं नृपवरं विनिशम्य मुदान्वितः ।
स निजमन्त्रिवरान् समदीदिशत्तमधिगम्य समानयतेति हि ॥ १९ ॥

अभिसृतोऽथ महीपतिरेष तान् सुबहुमान्य यथोक्तवदादरात् ।
प्रचुरगायकवन्दिजनस्तुतः सपदि शृङ्गपुरं समगच्छत ॥ २० ॥

अभिनिविश्य सुरेन्द्रपुरोपमं पुरमिदं परितोऽपि विलोक्य च ।
अथ सुविस्मयमाप महीपतिर्निजपुरादपि भूरिगुणान्वितम् ॥ २१ ॥

बहुपदातिधृतासिलतालसद्द्युतितटिद्गजमेघकदम्बकम् ।
पटुरवं पृतनाम्बरमूर्जितं पुरमिदं परितोऽपि समावृणोत् ॥ २२ ॥

विहितवन्दिजनामितवन्दनं तमभिनन्द्यगुणं नृपनन्दनम् ।
जितपुरन्दरसुन्दरमन्दिरं रुचिरसौधममी ममनीनयन् ॥ २३ ॥

अथ वराहतनूभवनिम्नगाशिशिरशीकरमन्दगवायुना ।
दरदलत्कुसुमौघसुगन्धिना स विजहार वधूगणसेवितः ॥ २४ ॥

अनुनदीतटभासुरदीर्घिकापरिसरे परमं शिवमर्चयन् ।
बहुलचम्पकमालतिमल्लिकासुमचयैर्मुदमाप महीपतिः ॥ २५ ॥

यतिवरं मलहानिकरेश्वरं क्षितिसुरैश्च सुरैरभिवन्दितम् ।
स समवेक्षितुमात्मसमैर्जनैः सह गृहान्निरगाद्वसुधाधिपः ॥ २६ ॥

समधिरुह्य गिरिं स महीपतिः सगिरिजं मलहानिकरेश्वरम् ।
रजतपर्वतमूर्धनि भास्वरं शिवमिवैक्षत देवगणार्चितम् ॥ २७ ॥

इह भवेन्न भयं मम दानवादिति विमृश्य धिया रजताचलः ।
गिरिजया परिरक्षित एव किं स परितः पुरवीथिकया बभौ ॥ २८ ॥

विभतुर्गिरिजातनयौ मुदा पटुतरौ बहुविघ्नविदारणे ।
अहमहं प्रददामि मनोरथान्नतजनेभ्य इतीव पुरस्स्थितौ ॥ २९ ॥

इति वदन् वसुधाधिपनन्दनः शिवपदं शिरसा प्रणनाम च ।
समवरुह्य गिरिं तमथो मठं प्रति ययौ यतिराजदिदृक्षया ॥ ३० ॥

अनुनदीतटमायतमन्दिरं सकलदेवगणप्रतिमायुतम् ।
अतिरवीन्दुपथं गुरुशाङ्करं रुचिरमेरुमिवैक्षत भूमिपः ॥ ३१ ॥

अथ नृपे खलु याति सरस्वतीसदनमाश्ववनीसुरराण्मुदा ।
स्वयमपि द्रुतमेतदगात्तयोर्युतिरभाच्छिवतत्सखयोरिव ॥ ३२ ॥

कुशलवाक्यमनोहरभाषिणौ समुदितौ यतिराजनृपोत्तमौ ।
विबभतुर्हिमहेममहीधराविव गुणैर्मणिभिश्च विभासितौ ॥ ३३ ॥

नृपवरार्हमहाधनवस्तुभिः क्षितिपतिं परितोष्य यशस्विनम् ।
स यतिराट् समवर्धयदाशिषा सदसि शक्रमिवाङ्गिरसः सुतः ॥ ३४ ॥

इति स तं समभाषत योगिनं प्रचुरसंपदियं खलु मामिका ।
भवदुपात्ततपोबलवर्धिता समुदितेव हि शारदचन्द्रिका ॥ ३५ ॥

अथ विधाप्य समस्तदशारदामहनमाशु महाविभवान्वितम् ।
मुदितभाषणतत्परमानसौ निजनिजं निलयं प्रतिजग्मतुः ॥ ३६ ॥

पुरमिदं हि पुरारिपुराधिकं तदिह भूमितलेऽस्य समं क्व च ।
विलसतीति महीपतिनन्दनो मनसि तत्र विचारपरोऽभवत् ॥ ३७ ॥

सचिवमानिनमभ्यवदन्नृपः किमपि यन्मम कीर्तिकरं भवेत् ।
यतिपतेरपि संमतमत्र यत्सुकृतकर्म कुरु त्वरयेति तत् ॥ ३८ ॥

गुरुमठोभयपार्श्वनदीतटे सुपरिमृश्य तदा मठयोर्युगम् ।
स निरमापयदेष नृपोदितादितरदेन किल स्वमतं स्मरन् ॥ ३९ ॥

नृपतिरेष वसिष्ठमुनेर्यथाऽऽश्रमवरे कुशिकान्वयसंभवः ।
समनुभूय सुखानि पुरात्ततो विनिरगात् कलशेशदिदृक्षया ॥ ४० ॥

अथ गुरुस्त्वधिकारिजनैर्निजैर्नृपकृतं सकलं प्रविचारयन् ।
न विचचाल धृतेः खलु कालविद्भवति नो परभीः सुतपस्विनाम् ॥

गुरुवरः सममन्त्रयदात्मवान् प्रकृतकार्यहिताहितचिन्तनम् ।
बहुगुणैर्नयशास्त्रविशारदैः रुचिरसौधविविक्तगृहान्तरे ॥ ४२ ॥

अभिमतं स्वमुवाच हि तान्प्रति बहुतरं नयशास्त्रसुसारवत् ।
हितगणस्य हि साम महोदयं कलितभेदमथेति न चेतरौ ॥ ४३ ॥

इति वदन्तममुं गुरुपुङ्गवं सपदि ते प्रतिपूज्य तथाऽब्रुवन् ।
भगवतोदितमेव समञ्जसं ननु भवान् विदधात्विति मा चिरम् ॥

इति विनिश्चितधीर्गुरुराण्मुदा बहुलशैवजनार्दितभूसुरात् ।
प्रथितशृङ्गपुरान्निरगात् पुरं कुडुपनामकमावसनोचितम् ॥ ४५ ॥

सपदि यान्तमथो गुरुपुङ्गवं निखिलपौरजना अनुदुद्रुवुः ।
अमरधेनुमिवामितकामदां प्रचलितां पथि नाकनिवासिनः ॥ ४६ ॥

अथ स तत्र समस्तसुखावहे कुडुपनामनि देवपुरोपमे ।
अवितपौरजनो गुरुपुङ्गवो न्यवसदाह्निकतत्परमानसः ॥ ४७ ॥

स च सुरासुरमौलिमहामणीलसदनन्तपदेऽर्पितमानसः ।
श्रुततदीयपुराणकथामृतो विलसति स्म महीसुरराण्मुदा ॥ ४८ ॥

परिजना अपि तत्र सरोवरे निबिडकेरमहीरुहशीतले ।
अनुदिनं स्वभिषेकगतक्लमा विविधभोगजुषः खलु रेमिरे ॥ ४९ ॥

गुरुकृतैर्मुदितश्च महोत्सवैः स कुडुपाधिपदेव उवाच तम् ।
वरमुने मनसेप्सितमाप्स्यसि व्रज न तावदितः स्वपुरं त्विति ॥

क्षितिसुरान् बहुशः किल भोजयन् घृतपयोबहुभक्ष्यवरादिभिः ।
रुचिरमन्नमहर्दिवमादरात् स च युधिष्ठिरवन्नितरां बभौ ॥ ५१ ॥

अथ नृपः कुलिशे(कलशे)श्वरसन्निधेर्महितवासुकिषण्मुखभासितम् ।
कलितनिम्नगया खलु धारया सरुचि कुक्ष्यपुरं मुदितोऽन्वगात् ॥

तदनु तत्र विधाप्य महोत्सवं शरसुतं मुदितः परितोष्य च ।
पथि पथि प्रगृहीतकरो ययौ स च पुरं किल मङ्गलनामकम् ॥ ५३ ॥

सततवारिधिमध्यविहारवान् प्रथितनौभिरथैव यथासुखम् ।
सरसतौर्यविलोकनकौतुकी मुदमवाप महीपतिनन्दनः ॥ ५४ ॥

अथ समागतमत्र विदंस्तदा क्षितिसुराग्रयगुरुं कुडुपाह्वये ।
पुरवरे द्रुतमीक्षितुमादरात् स विदधे वसुधाधिपतिर्धियम् ॥ ५५ ॥

सबलवाहनमन्त्रिपुरोगमस्त्वरितमेत्य महीसुरपूजितम् ।
मुहुरपृच्छदिहागमकारणं प्रियवचाः पृथिवीपतिनन्दनः ॥ ५६ ॥

इति वदन्तममुं यतिपुङ्गवः क्षितिपते भवता सह भाषणात् ।
सुविहितान्मनसः परितोषणं भवति नान्यदिहेति मुदाऽवदत् ॥ ५७ ॥

यतिपतेर्वचसा परितोषितो नृपतिरेनमुवाच न हीयतें ।
किमपि तव भवन्मनसि स्थितं पुरमितः स्वमिति प्रतिपद्यताम् ॥

अथ सरोवरनिर्मलवापिकापरिसरे मृदुबिल्वदलैः शिवम् ।
परिसमर्च्य विलासभरालसं नृपमसावुपदाभिरतोषयत् ॥ ५९ ॥

...वो बहु विधाय योगिराट् सोमशेखरमहीभृते तदा ।
...तोषिकमवाप च स्वयं पार्थिवात्पुनरुदारमानसः ॥ ६० ॥

नरपतिरपि तस्मात् सच्चिदानन्दभार-
त्यभिधयतिपतिं तं मानयित्वा पुरं स्वम् ।
पुरि पुरि महितोऽसौ देवताः संप्रपश्यन्
पथि पथि पृथिवीपैर्वर्धितर्द्धिर्जगाम ॥ ६१ ॥

श्रीमत्परमहंसपरिव्राजकाचार्यादिबिरुदावलीविराजित श्रीमन्नृसिंहभारती-
करकमलसंजातसकलविद्याविशारदपंडितपुण्डरीकमण्डलीमार्ताण्ड
श्रीसच्चिदानन्दभारतीमुनीन्द्रनिर्मापिते विद्वद्बालकलक्ष्मणशास्त्रिविरचिते
श्रीगुरुवंशे महाकाव्ये षोडशः सर्गः ॥

---

॥ विशेषसूचना ॥

(षोडशसर्गे)

श्लो० ९— बसवराजतनूजः—सोमशेखरनायकः II.

श्लो० ५३— मङ्गळपुरं—मङ्गळूरु

NOTES

V 9. Basavarāja tanūja (son of Basavarāja) Soma-...khara Nāyaka (See V. 60)

V 53: Maṅgaḷapura-Mangalore.

---

# सप्तदशः सर्गः ॥

श्रीसच्चिदानन्दयतिप्रवर्यः स्मरन्ननन्तेशगिरं महात्मा ।
तत्रैव कांश्चिद्दिवसाननैषीत् प्रतीक्षमाणः फलकालमस्याः ॥ १ ॥

प्रत्युप्तरत्नालिविचित्रमस्मै नूनं तनुत्रं परिकल्प्य हैमम् ।
संपूज्य दीपादिमहोत्सवैश्च समर्पयामास यतीन्द्रवर्यः ॥ २ ॥

इत्थं यतीन्द्रः कलधौतचित्रवस्तूनि पूजोत्सवसाधनानि ।
अनन्तभक्ताभिमतप्रदात्रेऽनन्तेश्वरायाथ समार्पयत्सः ॥ ३ ॥

अधीश्वरो मङ्गलनामपुर्याः संप्रार्थयामास समागमाय ।
तत्रैव संपूज्य यतीन्द्रमेनं निजाघदूरीकरणं विधित्सुः ॥ ४ ॥

भक्तौघभक्तिः परवान्यतीन्द्रः ससंभ्रमं शिष्यवरानुयातः ।
प्रत्युद्गतः पौरजनैः पुरस्तात्तन्मङ्गलाख्यं पुरमाससाद ॥ ५ ॥

विचित्रसामुद्रिकवस्तुजातैः राजोपचारैश्च यतीन्द्रमेनम् ।
संपूज्य तत्पादसरोजतीर्थं पिबन्स भेजे कृतकृत्यभावम् ॥ ६ ॥

संवर्द्ध्य योगी बहुधाऽऽशिषा तं कारञ्जदेवं च तदा दिदृक्षुः ।
पुरान्निरैदाशु स मङ्गलाख्यात् तत्प्रेषितानेकबलानुयातः ॥ ७ ॥

कारञ्जमैक्षिष्ट पुरं यतीन्द्रो यत्राधितस्थौ गिरिशो गिरीन्द्रम् ।
राज्ञां चरित्रं कपयोऽन्वकुर्वन् यत्र स्वभृत्यान्प्लवगान्प्रकल्प्य ॥ ८ ॥

संपूज्य तं देवमुदारसत्त्वस्तथोडुपं ग्राममथ प्रतस्थे ।
संप्रार्थितो माध्वयतीश्वरेण कृष्णं दिदृक्षुः कमनीयवेषम् ॥ ९ ॥

ुं समभ्यर्च्य महादरेण संमानितस्तेन यतीश्वरेण ।
लाडिसंज्ञं पुरमाप योगी लक्ष्मीनृसिंह्मो विरराज यत्र ॥ १० ॥

व कांश्चिद्दिवसानुषित्वा लक्ष्मीनृसिंह्मार्चनतत्परः सन् ।
थाय तस्मात् किल योगिराजः स तीर्थराजं समयात्पुरश्च ॥ ११ ॥

त्तरङ्गोज्ज्वलतुङ्गभद्रा चकास्ति यस्मिन् खलु दत्तभद्रा ।
ाघदूरीकरणात्तदीक्षा संसारसर्वार्त्यपहारदक्षा ॥ १२ ॥

रित्पतिं याति सरिद्वरा या प्रौढाङ्गना कान्तमिव प्रगल्भम् ।
ैकतोच्चारुनितम्बबिम्बा घनस्तनद्वन्द्वमहामहीध्रा ॥ १३ ॥

ाधितीरं मुनिसङ्घकीर्णनीवारषष्ठांशविभासितानि ।
ान्ति पत्रालिविलेखनश्रीगण्डस्थलानीव हि सैकतानि ॥ १४ ॥

ुल्लनीलोत्पलसक्तभृङ्गमञ्जुस्वनैरूर्मिततिः समन्तात् ।
न्तसंसारभरप्रखिन्नान् स्नातुं जनानाह्वयतीव यस्याम् ॥ १५ ॥

ीर्थवर्यं प्रविभाति यत्र नाम्ना महत्पापविनाशिनीति ।
त्वप्रविष्टोदरमध्यगान्या पुनः प्रसूते किल पुण्यभाजः ॥ १६ ॥

सप्तवारं नृपतीन्निहत्य स्त्रीबालवृद्धावधि जामदग्न्यः ।
ातश्च यस्मिन्मुमुचेऽघजालात्तद्रामकुण्डं प्रचकास्ति यस्याम् ॥

ीसच्चिदानन्दयतीन्द्रवर्यः शिलातले यत्र विधाप्य लिङ्गम् ।
ानर्च पूर्वं किल चारु विद्याविश्वेश्वराख्यः स च यत्र भाति ॥

न्तीव यत्रोभयकूलतोऽपि भूमीसुराणां विलसद्गृहाणि ।
स्विसिद्धौघमहो[illegible] ॥ १९ ॥

स सच्चिदानन्दगुरुस्तदानीं तत्रावनीदेववराग्रहारे ।
संप्रार्थितः स्वैश्च निरीतिबाधे वासाय कांश्चिद्दिवसान्मनोऽधात् ॥

तत्रैष तिष्ठन्यतिसार्वभौमः प्रसन्नधीर्देवसमर्चनेन ।
समस्तदिग्भ्यश्च समागतानां भूमीसुराणामकृतेप्सितानि ॥ २१ ॥

श्रीमद्गुरोः पादसरोजपाथोविधूतपाप्मान इमे प्रजग्मुः ।
तेषां मुखाद्दिक्षु ससार वार्ता सैवं गुरुर्वर्तत इत्यमुष्मिन् ॥ २२ ॥

हित्वा मठं तद्गुरुपुङ्गवः स्वं स्थलान्तरावासमनाः कुतोऽभूत् ।
इत्येव देशेषु महीपतीनां छालाग्रगाणां प्रबभूव शङ्का ॥ २३ ॥

चारानपि प्रेष्य गुरोः समीपं तेषां वचोज्ञातयथार्थवृत्ताः ।
सर्वे समेताः क्षितिपालकास्ते परस्परं मन्त्रयितार आसन् ॥ २४ ॥

अथो विनिश्चित्य नृपालकास्ते कार्यं गुरोर्दर्शनमित्यतन्द्राः ।
तदर्थमिक्केरिपतेः समीपं संप्रैषिषुर्वाचकपत्रिकां च ॥ २५ ॥

समागतां प्रेक्ष्य यथोचितार्थां पत्रीमनादृत्य निरास्य दूतान् ।
न श्रावयामास च वञ्चयन् तां इक्केरिभूमीपतये तु मन्त्री ॥ २६ ॥

इतो निरस्ता नितरां च दूता वृत्तं समाचख्युरिदं नृपेभ्यः ।
तेऽप्यात्तकोपा बहुदेशभूपा युद्धाय निश्चिक्युरुदारसत्त्वाः ॥ २७ ॥

अत्रान्तरे शाहुनृपालवर्यः संसान्त्व्य तान् क्रोधपरीतचित्तान् ।
स्वमन्त्रिणं संसदि बाजिरायं नियोजयामास यतीन्द्रकार्ये ॥ २८ ॥

इत्यब्रवीत्तं च नृपालचक्रचूडामणिः शाहुमहीमहेन्द्रः ।
उत्खाय शैवं मठमाशु तत्र निजां पुरीं प्रापय सद्गुरुं त्वम् ॥ २९ ॥

य सन्नद्धमनाश्च मन्त्री प्रमत्तहस्त्यश्वपदातिवर्गः ।
त कार्यं गुरुपुङ्गवस्य कृतं तदित्येव हृदा तदानीम् ॥

प्रमत्तान् विमतांश्च भूपान् वशे च कृत्वा विषयाननेकान् ।
त्य चेक्केरिनृपस्य राज्यं तदा न्यरौत्सीद्बहुभिर्बलौघैः ॥ ३१ ॥

ः समस्ता अपि दुद्रुवुस्ते राज्यात्तदा योधबलाद्भुताच्च ।
नलापीडितदावमध्यान्नीडानि हित्वेव पतत्रिसङ्घाः ॥ ३२ ॥

य संनद्धमहोद्धताश्वयोधस्तदानीं किल वाजिरायः ।
हिणोद्वेणुपुरे च वाच्यं यथार्थमुक्त्वेति निजाग्रदूतान् ॥ ३३ ॥

सदूतोक्तवचो निशम्य हाहाकृतं वेणुपुरे च दृष्ट्वा ।
च दुर्गं परिखाभिरेष विभाव्य सेनाधिपमित्यवादीत् ॥ ३४ ॥

पते सर्वबलानुगस्तां चमूं प्रविद्राव्य हयादि हृत्वा ।
विनिर्जित्य तदश्ववारान् प्रबध्य तन्नायकमानयस्व ॥ ३५ ॥

सभायामुपविश्य मन्त्री शृङ्गेरिराज्यं नृपसात्कृतं च ।
रूय तत्रत्यविचारणाय संप्राहिणोत् कञ्चन दुष्टबुद्धिम् ॥ ३६ ॥

करिसेनापतिरेष युद्धं प्रख्याप्य राजानमतीव चक्रे ।
ः सुयुद्धं प्रबभूव तत्र देवेन्द्रदैत्याधिपयोरिवाशु ॥ ३७ ॥

जिरायस्य च सैनिकास्ते कृतं सुदुर्गं परिखादि भङ्क्त्वा ।
ः प्रविष्टाः किल वह्न्यधीनान् चक्रुर्मठान् शैवजनोपगुप्तान् ॥

ान्मठांस्तैः परसैनिकैश्च हृतं धनं सर्वमिदं नृपाय ।
धिकारिप्रवरास्तु शैवा निवेदयामासुरलं प्रखिन्नाः ॥ ३९ ॥

निशम्य तद्विस्मयमाप भूपः आहूय तं मन्त्रिणमित्यपृच्छत् ।
आरब्धमेतत्कदनं किमर्थं तन्मूलमाचक्ष्व विचार्य सम्यक् ॥ ४० ॥

प्रत्यर्थिविद्रावितकान्दिशीकवाक्यप्रतोदव्यथितान्तरस्य ।
निशम्य वाक्यं क्षितिपालकस्य जगाद मन्त्री किल वाक्यमेवम् ॥

शृङ्गेरिपुर्या समया यदा त्वं तदाप्रभृत्यैव यतीन्द्रवर्यः ।
मठं विहायैव वसत्यजस्रं स्थलान्तरे तत्कृतमेतदासीत् ॥ ४२ ॥

मदागमस्तस्य यतीश्वरस्य प्रवासहेतुः स कुतो बभूव ।
आचक्ष्व तच्चेति मुहुः स मन्त्री प्रोचेऽथ राज्ञा विचिकित्सयाऽऽशु ॥

उवाच राजानममात्य एवं पुराऽकरोस्तत्र मठं यतीशः ।
इत्थं च राज्ञानुचितं कृतं चेन्न स्थेयमस्माभिरिहेत्यहासीत् ॥ ४४ ॥

तस्यैव शिष्यः किल शाहुराजः स्वमन्त्रिमुख्यं त्विह बाजिरायम् ।
संप्राहिणोत् त्वन्मठभञ्जनाय स बाधते नूनमिदं हि राज्यम् ॥ ४५ ॥

इत्थं तदुक्तं विनिशम्य राजा मठो विधेयस्त्विति को न्यगादीत् ।
विधेहि धर्मं किमपीति चोक्तमन्यद्वचधास्त्वं निजदोषमूलम् ॥

उक्त्वा तमेवं पुनरत्र देशप्रधानिनं भूमिपतिर्जगाद ।
त्वं तत्र गत्वा मठमाशु दूरीकुर्वन् यतीन्द्रं परिसान्त्वयेति ॥ ४७ ॥

तेनापि संप्रेषितमुख्यदूता मठद्वयं चाशुतरं बभञ्जुः ।
तत्र स्थिताः शैवजनाश्च सर्वे ह्रियापलायन्त तदा नमन्तः ॥ ४८ ॥

ततः स देशाधिप एव तूर्णं विज्ञाप्य वृत्तं सकलं तदानीम् ।
संप्रार्थयामास यतीन्द्रमेनं गन्तुं पुरीं स्वां शिरसा प्रणम्य ॥ ४९ ॥

वदत्तं गुरुसार्वभौमः तदत्र नैवं मनसेप्सितं हि ।
च्छतं तोषणमेव राज्ञो मठद्वयं तिष्ठतु वा न वेति ॥ ५० ॥

स्म भूमीपतिरेष बाजीरायस्य सैन्यं प्रहिणोति कंचित् ।
युपायाङ्गगुणप्रवीणं सन्धातुमिच्छुः सकलप्रयत्नैः ॥ ५१ ॥

या सोऽपि सदश्ववारैर्बलैश्च युक्तस्तदथैत्य सैन्यम् ।
जिरायं कुशलोक्तिमुख्यप्रेमास्पदं वाक्यमुवाच धीरः ॥ ५२ ॥

माकर्ण्य तथेति मोदाद्यथार्हमाभाष्य नृपालकस्य ।
ऽथ कोशे बलमित्रवर्गे कच्चिच्छुभं हीत्यमुमन्वगादीत् ॥ ५३ ॥

तां वाचमथो निशम्य पुनस्तदिक्केरिनृपालमन्त्री ।
शब्दार्थविशेषयुक्तं राज्ञोक्तमस्मै कथयांबभूव ॥ ५४ ॥

हु शाहुक्षितिपालमन्त्रिन् यतो निमित्तात्त्वमितः समागाः ।
र्थमेतेन कृतं च राज्ञा बोभोतु तस्माद्युवयोस्तु सख्यम् ॥ ५५ ॥

तदुक्तं किल शाहुमन्त्री सत्यं च मत्त्वेति तमाबभाषे ।
मं तद्गुरुदर्शनाय कृत्वा व्रजेयं सबलः पुरीं स्वाम् ॥ ५६ ॥

निवेशाद्बहुशोऽत्र देशे दुर्भिक्षभीतिर्भवितेति राज्ञः ।
दि स्याद्गुरवे तदस्मै विज्ञप्तिपत्रीं प्रहिणोमि शीघ्रम् ॥ ५७ ॥

दाशीर्वचसां च पत्रं लप्स्ये प्रसादानपि पादपाथः ।
त्वमत्रास्व मया सहैवं राज्ञे च विज्ञापय दूतमुख्यैः ॥ ५८ ॥

तदुक्तः क्षितिपालमन्त्री राज्ञः समीपं निपुणांश्च दूतान् ।
य कालोचितकार्यवेत्ता तेनैव साकं किल गच्छति स्म ॥ ५९ ॥

ततः स्वमन्त्रिप्रहितात्मदूतविज्ञापितेवक्केरिनृपस्तदानीम् ।
तमर्थमेतद्यतिसार्वभौमसकाशमेवाशु निनाय दूतैः ॥ ६० ॥

श्रुत्वा तमर्थं गुरुवर्य एष एतत्कृते राज्यभयं हि मास्तु ।
मयैव गन्तव्यमितः प्रमोदादित्येव शिष्यैः सह निर्जगाम ॥ ६१ ॥

प्रस्थाय तस्माद्यतिसार्वभौमः सिद्धिप्रदं सिद्धगिरौ गणेशम् ।
संपूज्य चादाय ततः प्रसादं माण्डव्यमुन्याश्रममाससाद ॥ ६२ ॥

ससंभ्रमं गच्छति योगिराजे हित्वा ह्यवाचीं किल धानदाशाम् ।
सहस्ररश्माविव पूर्वमन्त्री मार्गोपरोधं समचीकरच्च ॥ ६३ ॥

तपःप्रतापात्तमथैव भित्वा योगी च भास्वानिव मेघजालम् ।
मठं स्वकीयं हरदत्तनाम्नि क्षेत्रे वरिष्ठे मुदितोऽध्युवास ॥ ६४ ॥

तदा खलु कदापि नो जगति जातु दृष्टं मुदा
विलोकनसमुत्सुका विषयवासिनः सत्वरम् ।
विलोक्य गतकल्मषा विविधभागधेयैर्गुरुं
समर्च्य सकलार्थदं निखिलमानुकूल्यं व्यधुः ॥ ६५ ॥

इति श्रीगुरुवंशमहाकाव्ये सप्तदशः सर्गः ।

॥ विशेषसूचना ॥
(सप्तदशसर्गे)

श्लो० २८—१७२६-२७ (AD) वत्सरे कर्णाटकदेशे बाजिरायः युद्धं कृत्वा सर्वत्र विजयमवाप । सोमशेखरनायकोऽपि तेन जितः सन् महाराष्ट्रनृपेभ्यः "चौत्" नामकं करं प्रदातुं अभ्युपागमत् ।

## NOTES

**V. 28.** Bāji Rao Peshwa was at that time campaigning in the Karnāṭaka country 1726—7. Sōmaśekhara was defeated and agreed to pay chouth to the Marāṭhas.

## अष्टादशः सर्गः ॥

---

च्चिदानन्दगुरुर्व्यभौतरां सहस्रलिङ्गोज्ज्वलतुङ्गभद्रया ।
जिते॓ऽथो हरदत्तयोगिनो वराश्रमे शम्भुरिवाविमुक्तके ॥ १ ॥

ङ्कराचार्यवरप्रतिष्ठितं मठं विहायैव गुरौ तपस्विनि ।
छ्रूण चान्यत्र तदोपिते॓ऽभवन् देशास्तु दुर्भिक्षभयप्रपीडिताः ॥

व तत्क्षामवशाज्जनाः स्वकान् देशांश्च हित्वा क्षुधया प्रपीडिताः ।
ा विवर्णाकृतिवस्त्रवर्चसो गुरुं सुदीनाः शरणं प्रपेदिरे ॥ ३ ॥

गुरुस्तत्र महाधनव्ययैः संपाद्य धान्यानि सुदुर्मिलान्यपि ।
ाय चान्नानि बहूनि तानसौ संरक्षयामास पितेव पुत्रकान् ॥ ४ ॥

यागमार्थं स षडङ्गवेदविद्विप्रान्समाकार्य नदीतटे शुभे ।
न्यकल्पोदितकर्मकोविदैर्द्विजैश्च तच्छान्तिमतानयद्गुरुः ॥ ५ ॥

र्ष तुष्टः सहसा सुरेश्वरो यत्रैव भूदेवगुरुर्व्यवर्तत ।
ांसि पूर्णानि तदाम्बुवर्षणैः सस्यानि सम्यक् फलवन्ति चाभवन् ॥

द्विलोक्याद्भुतकर्म सद्गुरोः सुविस्मितास्तत्र महाजनाश्चिरम् ।
न्यसाधारणजीवनप्रदं सुरेन्द्रमेवाथ तमाशु मेनिरे ॥ ७ ॥

शारदाया नवरात्रपूजनं कर्तुं यियासौ किल योगिपुङ्गवे ।
धायि मार्गे पुनरेव मन्त्रिणा विघ्नो महान् वञ्चितराजशासनः ॥

प्रभृत्येव धृतव्रतो मुनिः स शारदादर्शनपूजनावधि ।
भुज्यते॓ऽन्नं हि मयेत्युदारधीस्तत्रैव तस्थौ नियमात्तपोरतः ॥ ९ ॥

अथावनीशोऽपि तदा विचिन्तयन् न चागतं सैन्यमितः कुतोऽपि सः ।
अयं यतीन्द्रः स्वपुरं प्रविष्टवान् न वेति तं मन्त्रिणमेव पृष्टवान् ॥

नृपेण पृष्टः पुनरित्युवाच सः प्रापैव नाद्यापि मठं यतीशिता ।
पुरे स्वकीये हरकेरिनामनि प्रवर्ततेऽसौ किल योगिपुङ्गवः ॥ ११ ॥

अथोऽवदत्तं बसवेन्द्रनन्दनो यतीशिवारं परिसान्त्व्य सादरम् ।
निजां पुरीं प्रापय धर्मदर्शिनं त्वमन्तरायो न भवेति मन्त्रिणम् ॥

एवं किलोक्तः स च वञ्चनापरः शीघ्रं समागत्य यतीन्द्रसन्निधिम् ।
नृपोक्तवाक्यं हृदि वञ्चयंस्तदा जगाद वाचं भयसूचिकां गुरोः ॥

अवेहि योगीन्द्र नृपेन्द्रभाषितं सैन्यं प्रविष्टः सचिवोऽपि नागतः ।
भवत्कृते राज्यभयं महत्तरं बभूव तेनेत्थमभाणि मां प्रति ॥ १४ ॥

गूढाशया एव भवन्ति पार्थिवा असह्ययादःकलुषा इव ह्रदाः ।
तेषां हृदिस्थं भुवि केन शक्यते ज्ञातुं यथातत्त्वमतो विचार्यताम् ॥

इत्येतदुक्तं विनिशम्य योगिराट् धीराग्रणीः प्रत्यगदीद्विमृश्य तम् ।
अस्मत्कृतं चेति यदि ध्रुवं हृदि क्षमाभृतस्तर्हि समीरितं शृणु ॥ १६ ॥

धर्माध्वनीनस्य धनागमेन किं राज्येन तेनास्ति मम प्रयोजनम् ।
परं तु धर्माद्धनधान्यपुष्कलो देशश्च भूयादिति मे सदा मतिः ॥१७॥

श्रीशङ्कराचार्यतपःप्रभावतः सर्वासु दिक्षु प्रथिता मदीयाः ।
शिष्याश्चिरं सन्ति हि सत्यमत्र ते परं तु कार्ये न मया प्रचोदिताः ॥

अथापि तस्मात् किल देशभीरियं जातेति भूपस्य मनो यदीदृशम् ।
मयैव गत्वा तदिदं निवार्यते तथा क्षितीशोऽपि विदांकरोत्वयम् ॥

स चेद्भूमिपतिर्मयाऽधुना किं वा वदेत्तत्र तदानुसंस्थते ।
व तद्दर्शनलोलुपं मनो मुहुर्मुहुः प्रेरयतीव मामिदम् ॥ २० ॥

समाकर्ण्य यतीशितुः स चेदित्थं समायातु नृपस्य सन्निधिम् ।
न्भवेत्सर्वमिदं समञ्जसं तत्रेति चोक्त्वा प्रययौ यथागतम् ॥२१॥

समालोच्य सुधीर्यतीशिता प्रस्थाय तस्माद्बहुखड्गपाणिभिः ।
पेतो मितशिष्यसंवृतस्तद्रामचन्द्रापुरमन्वगात्तदा ॥ २२ ॥

स्थितं वेणुपुरस्थिता जनाः कल्याणशीलाः कमनीयविग्रहम् ।
समागत्य गिरीशसंनिभं गुणैस्तदा दत्तकरा ववन्दिरे ॥ २३ ॥

पतिर्यत्र दशास्यकन्धरप्रोद्भेदनिर्यद्रुधिरौघपङ्किलान् ।
लयामास शरान् प्रतापवान् विभाति सा यत्र शरावती नदी ॥

ान् गुरुस्तत्र समस्तभूसुरैर्महर्षिकल्पैरनिशं प्रपूजितः ।
मचन्द्राभिधसत्पुरे बभौ वसिष्ठमुख्यैरिव राघवश्चिरम् ॥ २५ ॥

षु तत्रापि गतेषु केषुचित्समागतं तं यतिराजपुङ्गवम् ।
तया मन्त्रिवरो महीक्षिते न श्रावयामास पुरोदितानि च ॥ २६ ॥

द्विचार्याशु यतीन्द्रपुङ्गवः श्रीशारदादर्शनसंविधित्सया ।
ां पुरीं गन्तुमियेष भास्वरः शिष्यैर्वृतः खड्गधरैश्च रक्षिभिः ॥२७॥

ासिते भूतदिने ततो निशि प्रादुर्बभूवैष महान्यतीश्वरः ।
रिनाम्ना प्रथिते वरे पुरे महोज्ज्वलः शम्भुरिवामरैर्वृतः ॥ २८ ॥

गमाद्विस्मितसर्वनागरा गुरुं विलोक्याशु मुदं विभेजिरे ।
ससंभ्रान्तधियः महाकुलं प्रगम्य पुता इव साश्रुलोचनाः ॥

अथैष योगी किल मल्लिकार्जुनं समर्च्य देवं विविधैर्महोत्सवैः ।
परेद्युरेव प्रयतो रथोत्सवं सुकारयामास समाहितात्मवान् ॥ ३० ॥

एवं च वाणीं परिपूज्य यत्नतो वासांस्यसंख्यान्यदितैष तन्मुदे ।
सुवासिनीभ्यश्च ततो महीसुरानतोपयत्सादरमन्नभोजनैः ॥ ३१ ॥

देवानसौ देवगुरूपमो गुरुः पुरःस्थितान्पूज्यतमः प्रपूज्य च ।
प्रस्थाय तस्माद्बहुशिष्यसेवितस्तीर्थाभिधानं पुरमाप सत्वरम् ॥

एवं स्थिते तत्र यतीन्द्रपुङ्गवे स बाजिरायः किल गूढपूरुषैः ।
विचार्य वृत्तान्तमवोचदागतं सहात्मना प्राक् सचिवं तदेति तम् ॥

नाद्यापि शृङ्गेरिपुरं प्रविष्टवान् श्रीमान् गुरुर्मे किल तत्र कारणम् ।
किं वा वद त्वत्क्षितिपालकेन वा त्वयैव वोपेक्षितमन्यथैव वा ॥३४॥

पृष्टः स तेनेत्थमवोचदञ्जसा विशङ्कितः शाहुनृपालमन्त्रिणम् ।
गत्वाऽहमेवाशु यतीन्द्रसन्निधिं तं प्रापयिष्यामि निजं मठं त्विति ॥

इत्युक्तवन्तं सचिवं तदा मुदा संप्राहिणोद्दूतवरैर्निजैः सह ।
आज्ञाप्य कर्तव्यमथो स शाहुराट्क्षितीशमन्त्री गुरुराजसन्निधिम् ॥

ततः प्रतिश्रुत्य तदीयशासनं पुनस्तदिक्केरिनृपालपत्तनम् ।
गत्वाऽयमस्मै सकलं न्यवेदयद्वृत्तान्तमेतद्रहसि स्फुटं त्विति ॥३७॥

श्रुत्वैतदुक्तं बसवक्षितीशितुः पुत्रोऽपि सर्वं निजमुख्यमन्त्रिणः ।
निर्वाणिनाम्नः किल कृत्यमत्र तत् तदा गिराऽमंस्त तदीयया नृपः ॥

तस्याधिकारस्य तदीयनामता संप्रापणीयेति तदा दधद्धृदि ।
ततोऽनुमेने यतिराजसन्निधिं गत्वा चमूपं परिसान्त्वनाय सः ॥

शासच्च स सोमशेखरो राजा पुरीं प्रापय पारितोषिकम् ।
वक्तव्यगिरं ब्रुवन् मुनिं प्रसाद्य यत्नैरिति नीतिगोचरैः ॥

नीशप्रहितश्च भूपतिः श्रीसच्चिदानन्दमुनीन्द्रसन्निधिम् ।
प्रतीक्ष्यावसरं महामतिर्ददर्श तत्पादसरोरुहद्वयम् ॥ ४१ ॥

धिराजोन्नतमौलिशोभितस्फुरत्किरीटोज्ज्वलरत्नदीपकैः ।
जितं तद्गुरुपादपङ्कजं नत्वैष बद्धाञ्जलिरित्ययाचत ॥ ४२ ॥

गुरो भासुरसोमशेखरक्षितीशसेनापतिरित्यवेहि माम् ।
कमाकर्ण्य मदीरितां मुदा दयां विधेहि क्षितिपालनन्दने ॥ ४३ ॥

ना केनचिदत्र कल्पितं परोक्षतो मे यदभूच्च सांप्रतम् ।
लेशेऽपि मनो न दीयतां समीक्ष्य मामित्यवदत् क्षितीश्वरः ॥

मदीये सकलोऽप्युपद्रवस्त्वयैव नित्यं तपसा निवार्यते ।
महिम्नो भवतस्तपोनिधेस्तथा भवेत् क्षुद्रजनैः कुतश्च सः ॥४५॥

मदुक्तं विनिवेद्य योगिने समर्प्य तस्मै किल पारितोषिकम् ।
यथेति स्वमठं च सादरं संप्राहिणोन्मामवनीशनन्दनः ॥ ४६ ॥

र्थयन्तं मुहुरित्थमादराच्छ्रीसच्चिदानन्दयतीन्द्रपुङ्गवः ।
र्तिं सौम्यदृशा विलोक्य तं मुदा बभाषे प्रणयोक्तिपूर्वकम् ॥४७॥

सतीदं किल सोमशेखरक्षितीश्वरे राज्यमनीतिबाधकम् ।
त एवात्र तपःक्रियाः सतामिन्द्रे यथा वर्षति सस्यसंपदः ॥४८॥

तु राज्ञां जडधीभिरावृतः प्रकाशमेति प्रथितोऽपि नैव हि ।
सदा गर्जितमेघजालकैः राकाविधोर्निर्मलचन्द्रिका यथा ॥ ४९ ॥

अथापि काले किल सत्समागमात् प्रसन्नतां प्राप्स्यति भूय एव सः ।
इति प्रतीक्ष्यैव समावसं चिरादितो यथा राजवचोऽनुमंस्यते ॥ ५० ॥

इत्येनमाभाष्य तदा निजैर्जनैस्तेनापि सेनापतिना निषेवितः ।
श्रीसच्चिदानन्दगुरुर्महामना विनिर्ययौ तीर्थपुरात्ससंभ्रमम् ॥ ५१ ॥

गच्छन्तमेनं पथि सर्वसैनिकैः समन्वयुः पौरजना अनिच्छवः ।
हातुं ततो जानपदाश्च ये च ते समीक्ष्य संनम्य मुदोपदां ददुः ॥

एतैश्च सर्वैः सह वन्दिमागधैस्तोष्टूयमानो रुचिरातपत्रवान् ।
प्रपूरयन्वाद्यरवैर्महीभृतां गुहा ययौ देशिकपुङ्गवः पुरम् ॥ ५३ ॥

प्रत्युद्गतश्चैष पुरो महाजनैर्निजप्रजाभिः फलयुक्तपाणिभिः ।
पुरेऽत्र भूमीसुरराड्बभौतरां जयश्रिया लक्षितदेवराडिव ॥ ५४ ॥

ब्राह्मण्यमेतद्गुरुणा स्थिरीकृतं महीतलं प्रागिव दानवारिणा ।
इत्थं शशंसुर्बहुधा गृहे गृहे परस्परं तत्र पुरे महाजनाः ॥ ५५ ॥

अथैनमारात्रिकया मुदान्विता नीराजयामासुरनेकधा गुरुम् ।
प्रसूनलाजैः परितोऽप्यवाकिरन् प्रणेमुरेते बहुशोऽपि नागराः ॥ ५६ ॥

श्रीसच्चिदानन्दगुरुर्गिरौ शिलास्तम्भे लसन्तं द्विरदाननं तदा ।
समर्च्य तस्मै सितशर्कराचलं निवेदयामास विनोदमानसः ॥ ५७ ॥

ततो भवान्या सह मल्लिकार्जुनं प्रणम्य धीरः प्रययौ मठं प्रति ।
तत्रापि विद्यापदपूर्वशङ्करं श्रीशारदां साधु मुदाऽभ्यपूजयत् ॥ ५८ ॥

ततो मठान्तर्महिते वरासने तत्रोपविश्यानुसृतान् जनानसौ ।
यथार्हवाग्भिर्बहुमानपूर्वकं समन्वजानात् स्वगृहाप्तये मुनीट् ॥ ५९ ॥

धिराजार्चितपादपङ्कजस्तपोबलाधूतरिपूत्करस्तदा ।
निर्भिन्नपयोदमण्डलः सहस्ररश्मिः शरदीव स व्यभात् ॥ ६० ॥

मध्येतारं कविरिव बुधैः शुक्लपक्षे शशीव
ज्योत्स्नाजालं दिशि दिशि किरन्नाबभासे नितान्तम् ।
कीर्त्या ख्यातो वचनसुधया तोषयन् सर्वशिष्यान्
साकं सद्भिः सदसि सुमहान् सच्चिदानन्दयोगी ॥ ६१ ॥

समस्तद्वीपोर्वीतलगिरिपरिव्याप्तयशसो
गुरोरेतच्चित्रं चरितमिह वक्तुं भुवि बुधैः ।
कथं शक्यं तच्चेद्यदि स खलु शेषः कथयिता
तदा तद्वर्ण्यं स्यादपि भवति नो वेति विशयः ॥ ६२ ॥

श्रीमत्परमहंसपरिव्राजकाचार्यादिबिरुदावलीविराजित श्रीमन्नृसिंहभारती
करकमलसंजातसकलविद्याविशारदपंडितपुण्डरीकमण्डलीमार्ताण्ड
सच्चिदानन्दभारतीमुनीन्द्रनिर्मापिते विद्वद्बालकलक्ष्मणशास्त्रिविरचिते
श्रीगुरुवंशे महाकाव्ये अष्टादशः सर्गः ॥

---

## एकोनविंशः सर्गः ॥

---

इत्थं ततः सकलदिग्विजयं विधाय
श्रीमन्मठे गुरुवरोऽखिलदेवमूर्तीः ।
तच्छास्त्रवेदिवरशिल्पिभिरेष मोदा-
दाधापयत् सुकलधौतमयीर्विचित्राः ॥ १ ॥

रम्याश्च ताः शुभबलान्वितसन्मुहूर्ते
वेदार्थमन्त्रनिखिलागमतत्त्ववेदी ।
विप्रैर्विधाप्य जपहोमविधिं यथोक्तं
प्रातिष्ठिपच्च यतिराजवरो वदान्यः ॥ २ ॥

एवं दिनानि कतिचित् स्वमठे यतीन्द्रो
वेदान्ततत्त्वपरिशीलनसक्तचेताः ।
विद्वत्कदम्बकमलाकरभानुरेषः
श्रीमान् निनाय नितरामविता प्रजानाम् ॥ ३ ॥

मूकाम्बिकामथ सुपूजयितुं मनस्वी
सामाजिकैश्च परिवारजनैरुपेतः ।
प्रायात् सुवन्दिपरिवन्दितसद्गुणौघः
कोल्हापुरीं सकलदेवनिवासभूमिम् ॥ ४ ॥

आनर्च तामपि महाविभवैर्मुनीन्द्रो
मान्यस्तदा विविधराजमहोपचारैः ।
तत्प्रीतये सकलविप्रसुवासिनीनां
बृन्दं तथैव समतोषयदम्बराद्यैः ॥ ५ ॥

प्राप्य प्रसादमथ तत्र स योगिवर्यः
कोटीश्वरेक्षणसमुत्सुकचेतसाऽतः ।
निर्गत्य सिन्धुसलिले च कृताभिषेकः
संपूज्य देवमपि मोदमवाप भूयः ॥ ६ ॥

इत्थं ततः सकलतीर्थवरेषु देवान्
नत्वा विधाय मुदितान् बहुशिष्यवर्गान् ।
हालाडिनामकपुरं निजमाप्य योगी
लक्ष्मीनृसिंहमपि तत्र मुदा समार्चत् ॥ ७ ॥

चित्रं रथं कुशलिशिल्पिवरैर्विधाप्य
नूनं (नूत्नं) महार्हमयमस्य मुदे मुनीन्द्रः ।
तेनोत्सवं विविधवाद्यविचित्रनृत्तैः
प्राकल्पयन्नरहरेरखिलात्मकस्य ॥ ८ ॥

देशे तदा निखिलजानपदाः प्रजाश्च
प्रादुः करान् विविधरत्नसुवर्णराशीन् ।
संपूज्य तत्रभवते गुरवे प्रहृष्टात्
तस्माच्च वाञ्छितफलं नितरामवापुः ॥ ९ ॥

श्रीमान् मुनिः सपदि शृङ्गपुरीमवाप्य
दिग्भ्यः समागतविपश्चिदभिष्टुतः सन् ।
श्रीचन्द्रमौलिशिवपूजनहृष्टचित्तो
नित्यं मुमोद दिवि देवपतिर्यथोर्व्याम् ॥ १० ॥

श्रीरङ्गपट्टणमहीपतिरस्य कीर्तिं
व्याप्तां दिशासु सकलासु निशम्य मोदात् ।

लब्धुं महोन्नतिमथाशु गुरुप्रसादात्
संप्रैषयत् गजवरं च वरांशुकानि ॥ ११ ॥

संप्रेषितं गजवरं च गुरुर्वदान्यो
भक्त्या समर्प्य किल सर्वदशारदायै ।
तेनोत्सवं विविधवाद्यविचित्रनृत्तैः
प्राकल्पयद्द्विजवरान् समतोषयच्च ॥ १२ ॥

श्रीमान् गिरौ गुरुवरश्च ततो भवान्या
मूर्तेर्विधापयितुमात्मनि सोऽष्टबन्धम् ।
ऐच्छत्तदा निखिलतन्त्रविदश्च विप्रान्
आकार्य शान्तमनसोऽत्र समादिदेश ॥ १३ ॥

मूर्तेस्तदागमविदः सकलाः कलाश्च
प्रावाह्य पुण्यसलिलान्वितरत्नकुम्भे ।
संरक्ष्य बिम्बपरिशुद्धिपुरस्सराणि
कर्माणि तान्यकृषतावनिदेववर्याः ॥ १४ ॥

तस्मिन् शुभेऽहनि च पुण्यतमे मुहूर्ते
केन्द्रोच्चगेषु गुरुकाव्यकलाधरेषु ।
प्रातिष्ठिपन्मुनिवरो महतीं महात्मा
मूर्तिं महीसुरवरैर्मुदितो भवान्याः ॥ १५ ॥

मूर्तिस्तदा सकलपुण्यसरिज्जलैश्च
कार्तस्वराकलितकुम्भसहस्रनिष्ठैः ।
वेदागमप्रथितमन्त्रगणैश्च सिक्ता
रेजे प्रसन्नपरशक्तिकृताधिवासा ॥ १६ ॥

इत्थं रथोत्सवमथो सुविधाप्य देव्या
विप्रान्महार्हवसनान्नसुदक्षिणाभिः ।
संतोष्य सन्मुनिवरोऽवभृथोत्सवं च
कृत्वाऽगमत् स मनसा कृतकृत्यभावम् ॥ १७ ॥

एवं स लोकमहितोऽथ विवाहलीलां
श्रीमल्लिकार्जुनविभोः सह तद्भवान्या ।
हर्षोच्छ्रयान्मनसि कारयितुं त्वियेष
पूर्वं यथा हिमगिरौ शिवयोस्तथा ताम् ॥ १८ ॥

कल्याणकौतुकविलोकनजातहर्षः
प्रालेयशैलमिव शैलवरं समेत्य ।
तत्र स्थितां रुचिररूपवतीं भवानीं
श्रीमल्लिकार्जुनवराय स निश्चिकाय ॥ १९ ॥

श्रीशालिवाहनशके रसबाणभूपै-
र्वर्षैर्मिते महितकार्तिकशुक्लपक्षे ।
आनन्दवत्सर इहार्कदिनेऽब्जवारे
मौहूर्त्तिकैरभिदधेऽथ वधूविलग्नम् ॥ २० ॥

पौरान्महाजनवरानखिलाः प्रजाश्च
सन्मङ्गलैर्विविधतूर्यमहोत्सवैः सः ।
आह्वाययन्मिलदमन्दमुदेधमान-
सीमन्तिनीभिरधिकारिजनैः स्वकीयैः ॥ २१ ॥

कल्याणमत्र शिवयोर्गुरुणा विधेयं
श्रुत्वैव विस्मृतसमस्तगृहाग्र्यकार्यैः ।

बालाजनैर्मिलितबालकवृद्धसङ्घै-
रेतत्पुरं निबिडितं बहुधा बभूव ॥ २२ ॥

श्रीमल्लिकार्जुनविभो रुचिरं विवाहं
द्रष्टुं तदर्तुनिवहः प्रसवैः फलैश्च ।
चित्रैः स्वकालकलितैर्युगपद्यथास्व-
वृक्षं समेत्य विरराज विलासशाली ॥ २३ ॥

उद्दामकोकिलकिशोररुताभिराम
आरामचूतमकरन्दमिलन्मिलिन्दः ।
उज्जृम्भमाणकुसुमोत्करगन्धवाह-
संचारबन्धुसुरभिः सुरभिः समाप ॥ २४ ॥

अम्भोविहारविगतश्रमघर्मतोयाः
प्रच्छायवृक्षतलकल्पितसंनिवेशाः ।
ग्रीष्मे समागतवति प्रबलोष्मतप्ता
देशान्तरागतजनाः सुखिनो बभूवुः ॥ २५ ॥

सौदामिनीस्फुरणतर्जितयोषिदोघैः
कान्तागमावधि दिनेषु निरीक्ष्यमाणः ।
वर्षर्तुरागमदनुत्तमकेतकीक-
निर्यत्परागपरिपूर्णदिगन्तरालः ॥ २६ ॥

पद्मानिवासजनितप्रमदप्रकर्ष-
फुल्लारविन्दकलहंससरोवरश्रीः ।
आगादगाधिपसुतोपयमं दिदृक्षुः
सीमन्तिनीव शरदादृतकीरवाणी ॥ २७ ॥

हेमन्त आप तदिहाहनि खर्वगर्वः
पुण्यात्मनां मन इवानृतकल्मषेषु ।
दैर्घ्यं निशासु गतवान् किल मन्त्रकाले
सन्मन्त्रिणां मतिरिव प्रचुरप्रचारः ॥ २८ ॥

प्राप्तसमीरशिशिरः शिशिरर्तुरेष
प्रालेयशैलतनयाकरपीडनेऽस्मिन् ।
मुग्धाङ्गनानयनकान्तिविजेतुकाम-
व्याकोशकोकनदकोमलपङ्कजश्रीः ॥ २९ ॥

उत्तुङ्गपण्यबहुलापणपूर्णवीथी-
संचारकृज्जनपदौघविलासहासैः ।
मेरूपमानमगमं शिवयोर्विवाहा-
दित्यद्रिराट्किल तुतोष पुरस्य मध्ये ॥ ३० ॥

श्रीमान् गिरिः सुपरितप्तसुवर्णपङ्क्ति-
प्रत्युप्तरत्ननिवहातुलमण्टपश्रीः ।
सर्वासु दिक्षु कलितोन्नतकेतनालिः
कल्याणभूधर इवैष जनैर्विजज्ञे ॥ ३१ ॥

स्नानं तयोरथ च माङ्गलिकं विधाप्य
नान्दीमुखग्रहमखादि विधाय कर्म ।
नीराजनं विदधुरत्र सुवासिनीभिः
साकं महीसुरवराः सुमहोत्सवेन ॥ ३२ ॥

योगीन्द्र एष महतीं विदुषां सभां ता-
मध्यास्य तत्र पुरतः खलु शारदायाः ।

आनाय्य मञ्जुमलहानिकरेशमूर्तिं
पूजां व्यधत्त वरराजमहोपचारैः ॥ ३३ ॥

आरोप्य तामपि सरत्नसुवर्णयानं
तूर्यस्वनैः श्रुतिविदां बहुवेदघोषैः ।
वीथ्यामथो महितमङ्गलयोषिदोघ-
गीतैर्मुदा गुरुवरो गिरिराजमाप ॥ ३४ ॥

प्रत्युप्तनूत्नतमरत्नविभासमाने
सन्मण्टपे च मलहानिकरेश्वरं तम् ।
भक्त्या समर्च्य मधुपर्कविधानतोऽसौ
विप्रैरवादयदथोभयगोत्रनाम ।। ३५ ॥

पाणिग्रहं समतनिष्ट ततो भवान्याः
श्रीमल्लिकार्जुनवरश्च शुभे मुहूर्ते ।
तन्मङ्गलाहतविचित्रितवाद्यघोषः
प्रापत्तदा दिविषदामपि मार्गमग्र्यम् ॥ ३६ ॥

जायापती च सुवितेनतुरत्र लाज-
होमं महोत्सवभरेण निरीक्ष्यमाणौ ।
सभ्यैः स (स्व) भक्तनिवहेषु मुदादधानौ
जातां गिरौ हिमवतीव विवाहलीलाम् ॥ ३७ ॥

कान्ताननाम्बुजनिरीक्षणजातलज्जा-
मारोहयन् स मलहानिकरेश्वरस्ताम् ।
अश्मानमद्रितनयां व्यरुचत्तदानीं
भक्तप्रदर्शनधृतात्मविवाहवेषः ॥ ३८ ॥

अग्निप्रदक्षिणमथो सुविधाय वेदी-
मध्यूषुषोः सपदि शङ्करयोर्युवत्यः ।
नीराजनं विदधुरत्र महोत्सवेन
तूर्यस्वनैः कुशलगायकवन्दिवाग्भिः ॥ ३९ ॥

योगीन्द्र एष विविधानपि भागधेयान्
कल्याणकौतुकजुषोः शिवयोश्च भक्त्या ।
आदौ समार्पयदथो किल भूसुरौघः
पश्चात्समागतजनाश्च यथाक्रमेण ॥ ४० ॥

तस्मिंश्चतुर्थदिवसे निशि तुर्ययामे
भक्त्याथ नाकबलिमत्र कृतं विलोक्य ।
चित्रार्पिताकृतिरिव प्रबभौ समस्तो
लोकः सुविस्मयभरेण च निर्निमेषः ॥ ४१ ॥

एवं चतुर्षु दिवसेषु महोत्सवेन
तूर्यस्वनैर्महितविप्रसुवासिनीभिः ।
नीराजनैर्विहितमङ्गलगीतिकाभिः
मेने जनैः पुरमिदं शिवलोक एव ॥ ४२ ॥

श्रीमान् गुरुः स परितोषभरात्तदानीं
ताम्बूलदानमपि विप्रसुवासिनीभ्यः ।
आचार्यतः किल विधाप्य समस्तसद्भ्यः
सन्मानपूर्वकमदाद्वसनानि भूरि ॥ ४३ ॥

प्रत्युप्तरत्ननिकरोज्ज्वलहेमशृङ्ग-
निर्धूतहेमगिरिकूटमथो शताङ्गम् ।

तौ दम्पती समधिरुह्य विराजमानौ
वीथ्यां विलोक्य जनता मुदमाप भूयः ॥ ४४ ॥

रङ्गत्तरङ्गनिवहोज्ज्वलतुङ्गभद्रा-
नद्यामथावभृथमज्जनमङ्गलाङ्गौ ।
वन्दारुबृन्दपितराविव रेचतुश्च
तौ दम्पती रुचिरभूषणभासमानौ ॥ ४५ ॥

सस्नुस्तदा सरिति तत्र कृतावतारा
अन्योन्यहर्षजनितप्लवनप्रकर्षाः ।
कल्याणकुंकुमजलोक्षणरक्तवस्त्राः
छन्ना इवाशु शिवयोरनुरागपूरैः ॥ ४६ ॥

एवं मुनीशरचितक्षितिभृत्तनूजा-
श्रीमल्लिकार्जुनमनोज्ञविवाहवार्ता ।
अम्भोजगन्ध इव कोमलगन्धवाहैः
दिग्भ्यः समागतजनैः परितः ससार ॥ ४७ ॥

श्रुत्वा गुरोर्यश इदं च समस्तदिक्षु
व्याप्तं तदा महितसेतुपतिर्नृपालः ।
वर्धिष्णुतामभिलषन् निजवंशकीर्त्योः
संप्राहिणोद्रुचिरवस्तुकरानमुष्मै ॥ ४८ ॥

चित्ते चकार यतिराडथ तत्प्रदिष्ट-
वस्तूनि तानि बहुलाशिषमादधानः ।
ऐच्छत्तदा पृथुयशाः किल चापकोटौ
कर्तुं तदा दृढमतिश्च शिवप्रतिष्ठाम् ॥ ४९ ॥

श्रीरामनाथसविधे रुचिरं प्रसन्न-
विद्यापदोपपदशङ्करनामलिङ्गम् ।
प्रातिष्ठिपद्यतिवरोऽस्य समर्चनाय
प्रादान्महीमपि च सेतुपतिः स्वभक्त्या ॥ ५० ॥

ऐच्छत्ततो गुरुवरो गणनाथतुष्ट्यै
होमं च कारयितुमागममन्त्रवेदी ।
क्षौद्रेक्षुमोदतिलसक्तुगुडाज्यलाजै
रम्भाफलैरपि सहस्रसुनालिकेरैः ॥ ५१ ॥

कुण्डं विधाप्य रुचिरं स च लक्षणज्ञः
सन्मण्टपे महति तोरणवेदिकाढ्ये ।
वैश्वानरेऽत्र विधिवन्मथिते विधिज्ञैः
कल्पोक्तसंख्यमपि होममतानयच्च ॥ ५२ ॥

होमेन हस्तिवदनः सकलेहितार्थान्
तुष्टो ददाविव तदा मुहुराशु तस्मै ।
आदानकैतवलुलत्करपुष्करेण
प्राज्याज्यमुख्यहविषो दुरितं विधून्वन् ॥ ५३ ॥

एवं गुरुः शरदि भासुरशारदायाः
प्रीत्यै ततोऽवनिसुरैः समचीकरच्च ।
होमं जपं बहुधनैः शतचण्डिसंज्ञं
संप्रीणनैर्महितविप्रसुवासिनीनाम् ॥ ५४ ॥

द्रष्टुं समागतजनाः किल शारदाम्बां
विश्राणनेन वसनादिमनोरथानाम् ।

श्रीमन्मुनीशविहितेन मुदं प्रपन्नाः
प्रत्युज्जगुर्मुहुरमुष्य यशोमहत्त्वम् ॥ ५५ ॥

राजाधिराजगुरुरेष महान् स सच्चि-
दानन्दभारतिमुनिर्ववृधे यशोभिः ।
आनन्दयन्बुधवरान् बहुवाञ्छितार्थैः
पक्षे सिते विधुरिव द्युसदः कलाभिः ॥ ५६ ॥

॥ श्रीरस्तु शुभं भूयात् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यादिबिरुदावलीविराजित श्रीमन्नृसिंहभारती करकमलसंजातसकलविद्याविशारदपंडितपुण्डरीकमण्डलीमार्ताण्ड श्रीसच्चिदानन्दभारतीमुनीन्द्रनिर्मापिते विद्वद्बालकलक्ष्मणशास्त्रिविरचिते श्रीगुरुवंशे महाकाव्ये एकोनविंशः सर्गः ॥

गुरुवंशकाव्यं संपूर्णम् ॥



## ॥ विशेषसूचना ॥

### (एकोनविंशसर्गे)

श्लो० ११ — श्रीरङ्गपट्टणमहीपतिः – श्रीकृष्णराजवाडेयार II
काल: १७३४–१७६६ A. D.

श्लो० १८ प्रभृति — इमं च भवानीविवाहमधिकृत्य एभिः
गुरुभिः प्रणीताः कृतयः इदानीमपि तत्र गीयन्ते। तैः समारब्धा
पद्धतिरेव शृङ्गगिरौ इदानीमपि अनुस्रियते।

श्लो० २० — आनन्दसंवत्सरः – १७३४ A. D.

श्लो० ४८ — तदानीं मुद्दुकुमाररघुनाथनामकः सेतुपतिः राज्यम-
...।

श्लो० ५० — रामेश्वरक्षेत्रे विद्याशंकरलिङ्गप्रतिष्ठा १७३४–३५
...सरे कारिता स्यात्।

## NOTES

11. King of Srīraṅgapatnam=Krishṇa Rāja Wādiyār
...4—66.

18 ff The songs specially composed by this Jagad-
...n connection with this festival are sung even today.

20 Ananda year = A. D. 1734

48. The then Sētupati was Muttukumara Raghu-

50. The installation of the liṅga in Ramēśwaram
...have been done in 1734—5.

॥ श्रीः ॥

# ॥ श्रीगुरुपरंपरास्तोत्रम् ॥

शुद्धस्फटिकसंकाशं शुद्धविद्याप्रदायकम् ।
शुद्धं पूर्णं चिदानन्दं सदाशिवमहं श्रये ॥ १ ॥

सीमातीतमनाद्यन्तं नामोच्चारणभेषजम् ।
कामिताशेषफलदं श्रीमद्विष्णुमहं श्रये ॥ २ ॥

योगिहृत्पद्मनिलयं नतजीवहिते रतम् ।
श्रुतीनां जन्मभूमिं त्वां चतुर्मुखमहं श्रये ॥ ३ ॥

असमाहितमत्यन्तं प्रथिमामिततेजसम् ।
वशीकृतपरानन्दं वसिष्ठं गुरुमाश्रये ॥ ४ ॥

शुक्तौ रूप्यमिवाभाति यद्रूपं मयि कल्पितम् ।
शक्त्या परिहृतं येन शक्तिं तं गुरुमाश्रये ॥ ५ ॥

करणातीतचिद्रूपं परिपूर्णं परायणम् ।
परमानन्दसंतुष्टं पराशरमहं श्रये ॥ ६ ॥

वेदव्यासं स्वात्मरूपं सत्यसन्धं परायणम् ।
शान्तं जितेन्द्रियक्रोधं सशिष्यं प्रणमाम्यहम् ॥ ७ ॥

त्रिकालातीतचिन्मात्रप्रशान्तस्वान्तसंयुतम् ।
विकाराद्यैरसंस्पृष्टं शुकं गुरुमहं श्रये ॥ ८ ॥

गूढा माया यस्य वाक्यैर्व्रीडिता विलयं गता ।
क्रीडन्तं विद्यया सार्धं गौडपादं तमाश्रये ॥ ९ ॥

जीवेशभेदरहितं नाविकं भववारिधेः ।
भावाभावविदूरस्थं गोविन्दं गुरुमाश्रये ॥ १० ॥

शङ्कारूपेण मच्चित्तं पङ्कीकृतमभूद्यया ।
किंकरी यस्य सा माया शङ्कराचार्यमाश्रये ॥ ११ ॥

विश्वं मायामयत्वेन रूपितं यत्प्रबोधतः ।
विश्वं च यत्स्वरूपं तं वार्तिकाचार्यमाश्रये ॥ १२ ॥

अनाद्यविद्यामुत्सार्य प्रज्ञानघनरूपताम् ।
यो बोधयति सच्छिष्यान् तं बोधघनमाश्रये ॥ १३ ॥

सिताघनादिदृष्टान्तैर्यत्स्वरूपं श्रुतिर्जगौ ।
प्रज्ञानघन एवेति तं ज्ञानघनमाश्रये ॥ १४ ॥

ज्ञानानामुत्तमं ज्ञानं ज्ञानिनामुत्तमो यतः ।
ज्ञानोत्तम इति ख्यातं गुरुं तमहमाश्रये ॥ १५ ॥

ज्ञाननिश्रेणिमालम्ब्य ब्रह्माख्यं गिरिमुन्नतम् ।
आरुह्य कृतकृत्यो यस्तं ज्ञानगिरिमाश्रये ॥ १६ ॥

दुर्वादिदुष्टमातङ्गविदारणपटीयसे ।
नमः श्रीसिंहगिरये गुरवे दिव्यचक्षुषे ॥ १७ ॥

ईप्सितार्थप्रदो नित्यं प्रणतानां च देहिनाम् ।
यतिरीश्वरतीर्थाख्यः तं नमामि गुरुं शिवम् ॥ १८ ॥

श्रुतिमस्तककूटस्थमज्ञानद्विपभेदिनम् ।
श्रीमन्त्रराजमूर्तिं तं नृसिंहं गुरुमाश्रये ॥ १९ ॥

अविद्याच्छन्नभावानां नृणां विद्योपदेशतः ।
प्रकाशयति यस्तत्त्वं तं विद्यातीर्थमाश्रये ॥ २० ॥

अज्ञानां जाह्नवीतीर्थं विद्यातीर्थं विवेकिनाम् ।
सर्वेषां सुखदं तीर्थं भारतीतीर्थमाश्रये ॥ २१ ॥

अविद्यारण्यकान्तारे भ्रमतां प्राणिनां सदा ।
विद्यामार्गोपदेष्टारं विद्यारण्यगुरुं श्रये ॥ २२ ॥

विद्याविद्याविवेकेन पारं संसारवारिधेः ।
प्रापयत्यनिशं भक्तान् तं विद्यारण्यमाश्रये ॥ २३ ॥

अविद्यारण्यसंक्लेशकृशानुभृशतापितः ।
संश्रये सततं भूत्यै चन्द्रशेखरचन्द्रिकाम् ॥ २४ ॥

अविद्याख्यद्विपद्वैधीभावे दक्षं समाश्रये ।
नृसिंहभारतीशाख्यहरिं श्रुतिगुहाश्रयम् ॥ २५ ॥

पुरुषोत्तमतां यान्ति यमाश्रित्य जनाः श्रये ।
क्षराक्षरमतीतं तं पुरुषोत्तमयोगिनम् ॥ २६ ॥

किंकरीकृतभूपालं पङ्केरुहसमाननम् ।
तं कारुण्यपयोराशिं शङ्कराख्यं गुरुं श्रये ॥ २७ ॥

चन्द्रिकाधवलोदारसान्द्रकीर्तिच्छटाधरम् ।
इन्द्रियैर्दुर्जयं नौमि चन्द्रशेखरभारतिम् ॥ २८ ॥

प्रसिद्धविद्यानिलयं लसमानगुणोत्कटम् ।
बिसजाक्षार्चकं भक्त्या नृसिंहं तीर्थमाश्रये ॥ २९ ॥

पुरुहूतादिदेवौघपौरुषेयगुणोत्कटम् ।
पुरुषार्थप्रदं नौमि पुरुषोत्तमयोगिनम् ॥ ३० ॥

कामद्विरदपञ्चास्यरामणीयकमन्दिरम् ।
सोमोपमाननं श्रीमद्रामचन्द्रगुरुं भजे ॥ ३१ ॥

गुरसिन्धुलसत्कीर्तिं स्मरसिन्धुघटोद्भवम् ।
नारसिंहार्चकं श्रीमन्नारसिंहयतिं भजे ॥ ३२ ॥

सारासारविवेकज्ञं मारकाननकुञ्जरम् ।
शूरं दाने च निरतं नारसिंहयतिं भजे ॥ ३३ ॥

नृसिंहतां प्रयान्त्याशु यमाश्रित्य जना भुवि ।
नृसिंहभारतिं वन्दे द्विगुणोपपदं सदा ॥ ३४ ॥

तं सर्वभूताभयदं विभवैरन्वितं परम् ।
नारसिंहं गुरुं चापि नवं ज्ञानार्णवं भजे ॥ ३५ ॥

सत्यस्वरूपं सद्ज्ञाननिष्ठं साक्षाच्छिवं परम् ।
सदा दानरतं दान्तं सच्चिदानन्दमाश्रये ॥ ३६ ॥

महामेरुसमं धैर्ये माधुर्येऽप्यमृतोपमम् ।
ऊहापोहार्थनिष्णातं नारसिंहं गुरुं भजे ॥ ३७ ॥

सच्चित्ताम्बुजमित्राय सच्चरित्रयुजे नमः ।
सच्चिदानन्दभारत्यै सच्चिदानन्दमूर्तये ॥ ३८ ॥

सच्चिदानन्दभारत्यै नव्यायास्तु नमोऽनिशम् ।
नव्यात्मज्ञाननिर्धूताविद्याकार्योपलब्धये ॥ ३९ ॥

मारमातङ्गपञ्चास्यं मदसर्पद्विजर्षभम् ।
नृसिंहभारतिं वन्दे जिताक्षतुरगं सदा ॥ ४० ॥

तत्त्वमस्यादिवेदान्तवाक्यार्थज्ञानवारिधेः ।
पूर्णचन्द्रमसं वन्दे सच्चिदानन्दयोगिनम् ॥ ४१ ॥

अभिनवपदपूर्वान् सच्चिदानन्दसंज्ञान्
निगमशिखरवेद्यान् नित्यकल्याणरूपान् ।
त्रिभुवनजनवन्द्यान् सर्वलोकैकहृद्यान्
हृदयकमलमध्ये भावयाम्यम्बुजास्यान् ॥ ४२ ॥

प्रह्लादवरदो देवो यो नृसिंहः परो हरिः ।
नृसिंहोपासकं नित्यं तं नृसिंहगुरुं भजे ॥ ४३ ॥

श्रीसच्चिदानन्दशिवाभिनव्य-
नृसिंहभारत्यभिधान्यतीन्द्रान् ।
विद्यानिधीन् मन्त्रनिधीन् सदात्म-
निष्ठान् भजे मानवशंभुरूपान् ॥ ४४ ॥

सदात्मध्याननिरतं विषयेभ्यः पराङ्मुखम् ।
नौमि शास्त्रेषु निष्णातं चन्द्रशेखरभारतीम् ॥ ४५ ॥

विद्यातीर्थाभिधाचार्यो ह्यद्याभिनवपूर्वकः ।
शृङ्गेरीशारदापीठे विराजति जगद्गुरुः ॥ ४६ ॥

गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः ।
गुरुः साक्षात् परं ब्रह्म तस्मै श्रीगुरवे नमः ॥ ४७ ॥

इति श्रीगुरुपरंपरास्तोत्रं संपूर्णम् ॥

---

## ॥ श्रीगुरुपरम्परा ॥

सदाशिवः
नारायणः
ब्रह्मा
वसिष्ठमहर्षिः
शक्तिमहर्षिः
पराशरमहर्षिः
वेदव्यासः
श्रीशुकाचार्याः
गौडपादाचार्याः
गोविन्दभगवत्पादाचार्याः

## ॥ श्रीशृङ्गेरी श्रीजगद्गुरुपरम्परा ॥

१. श्रीशङ्करभगवत्पादाचार्याः
२. श्रीसुरेश्वराचार्यः
३. नित्यबोधघनाचार्यः
४. ज्ञानघनाचार्यः
५. ज्ञानोत्तमाचार्यः
६. ज्ञानगिर्याचार्यः
७. सिंहगिर्याचार्यः
८. ईश्वरतीर्थः
९. नरसिंहतीर्थः
१०. विद्याशङ्करतीर्थः
११. भारतीकृष्णतीर्थः

१२. विद्यारण्यः
१३. चन्द्रशेखरभारती (१)
१४. नरसिंहभारती (१)
१५. चन्द्रशेखरभारती (२)
१६. पुरुषोत्तमभारती (१)
१७. शङ्करानन्दभारती
१८. चन्द्रशेखरभारती (३)
१९. नरसिंहभारती (२)
२०. पुरुषोत्तमभारती (२)
२१. रामचन्द्रभारती
२२. नरसिंहभारती (३)
२३. नरसिंहभारती (४)
२४. अभिनवनरसिंहभारती (१)
२५. सच्चिदानन्दभारती (१)
२६. नरसिंहभारती (५)
२७. सच्चिदानन्दभारती (२)
२८. अभिनवसच्चिदानन्दभारती (१)
२९. अभिनवनरसिंहभारती (२)
३०. सच्चिदानन्दभारती (३)
३१. अभिनवसच्चिदानन्दभारती (२)
३२. नरसिंहभारती (६)
३३. सच्चिदानन्दशिवाभिनवनरसिंहभारती
३४. चन्द्रशेखरभारती (४)
३५. अभिनवविद्यातीर्थः

॥ शुभमस्तु ॥

: ध्यानश्लोकः गुरुपरंपरास्तोत्रे न दृश्यते। अस्मिन् काव्ये तन्नामा-
चेदमेव कारणम् ॥

रुपरंपरास्तोत्रे श्लो० ३२, ३३—अनयोः श्लोकयोर्द्वयोरपि तुरीयपादः
हयतिं भजे' इति एकरूपेणैव वर्तते इत्ययमंशः सम्यगवधेयः।
स्पष्टं ज्ञायते-यत् उभावपि श्लोकौ एकमेव आचार्यं नरसिंहभारती-
(III) वर्णयत इति। एतद्रीत्यैव २२—२३ तमश्लोकौ उभावपि
आचार्यमेकमेव वर्णयतः ॥

ताहशनिर्णयानुसारेण च गुरुपरंपरा अन्ते निर्दिष्टा वर्तते ॥

---

## NOTES

V 25-26. According to *Śrī Purushōttama Bhāratī*
*a* of poet Vishṇu, Śrī Narasimha Bhāratī I had two
es, Śrī Chandraśēkhara Bhārati II and Śrī
ōttama Bhārati I. After Śrī Narasimha Bhāratī
d *mukti*, Śrī Chandraśēkhara was installed on the
before Emperor Dēvarāya at Hampi [1](Canto IV).
ew Āchārya then went to Śringeri where he conse-
a shrine in his guru's honour and then, accompanied
brother disciple Śrī Purushōttama Bhāratī, went to
alu-Narasipur at the confluence of the Kapilā
ini) and Kāverī rivers, and there at the *āśrama* of
tāraṇya settled down to a life of penance. Very
afterwards he attained *Kaivalya*, and Śrī
ōttama consecrated a *liṅga* over his *samādhi*. The
r's minister then led Śrī Purushōttama to Hampi
Dēvarāya had him installed as Jagadguru. Then he
to Śringeri and assumed the headship of the
*ānam*.

[1] Canto of *Śrī Purushōttama Bhāratī Charita*.

Vishṇu was a contemporary of these three Ācharyas.

[2]In cantos IV, V, VI and X there are unequivocal references to this fact that Śrī Narasimha Bhārati I was the Guru of both Śrī Chandraśekhara and Śrī Purushōttama. In canto X the poet gives the following *paramparā*.

Śrī Vidyā Tīrtha
Śrī Bhāratī Tīrtha
Śrī Vidyāraṇya
Śrī Chandraśekhara (I)
Śrī Narasimha (I)
Śrī Chandraśekhara (II)
Śrī Purushōttama (I)

Every śloka in the Guruparampara stotra is a dhyāna śloka composed by an Āchārya in honour of his predecessor. Since Śrī Chandraśekhara Bhāratī II had no direct disciple, and was immediately succeeded by his co-disciple Śrī Purushōttama Bhāratī, there is no *dhyāna* śloka for him. He reigned for quite a short time.

[3]VV 32 & 33. Note that the fourth *pāda* in both these verses is the same-नारसिंहयतिं भजे. Obviously these two verses refer to one and the same guru.

Similarly [4]verses 22 and 23 refer to Śrī Vidyāraṇya.



2. Cantos of *Śrī Purushōttama Bhāratī Charita*.

3 & 4. Verses of *Śrī Guruparampara Stōtram*.

॥ विशेषसूचना ॥

२५,२६ — श्रीविष्णुकविप्रणीते श्रीपुरुषोत्तमभारतीचरिताख्ये
नरसिंहभारतीस्वामिनां (I), श्रीचन्द्रशेखरभारती, श्रीपुरुषोत्तम-
ति द्वौ शिष्यौ आस्तामित्युच्यते। श्रीनरसिंहभारतीस्वामिनां विदेह-
यनन्तरं 'हम्पि' क्षेत्रे श्रीदेवरायचक्रवर्तिनां पुरतः श्रीचन्द्रशेखर
मिनः शृङ्गेरीपीठाधिपत्ये पट्टाभिषिक्ता बभूवुः (अध्या ४
–१०९)। अमीषां च गुरव श्रीनृसिंहभारतीस्वामिनः इत्ययं
क्ष्यमाणेन श्लोकेन स्पष्टं ज्ञायते —

त्रत्या जनता नित्यं नरसिंहजगद्गुरोः ।
दुके लोकवन्द्ये तेऽपूजयद्गुरुपूजया ॥" (अ. ४ श्लो. ९६)

च श्रीचन्द्रशेखरभारतीस्वामिनः पट्टाभिषेकानन्तरं शृङ्गगिरिं
स्थितैः श्रीनृसिंहभारत्यपरशिष्यैः श्रीपुरुषोत्तमभारतीस्वामिभिः
ला-कावेरीसंगमप्रदेशस्थत्रिकूटलुनरसिपूरुक्षेत्रं गत्वा तत्र विद्यमाने
याश्रमे तपश्चरन्तोऽवात्सुः। तदा स्वल्पेनैव कालेन ते कैवल्य-
एतेषां च समाधिस्थले शिवलिङ्गप्रतिष्ठामकार्षुः पुरुषोत्तमभारती-
विज्ञाय चेमं वृत्तान्तं महाराजः स्वीयामात्यं संप्रेष्य श्रीपुरुषोत्तम-
मिनं आनाययामास हम्पीक्षेत्रम्। सद्य एव पट्टाभिषिक्ताश्च एते
साम्राज्ये। एतेषां श्रीपुरुषोत्तमभारतीस्वामिनामपि श्रीनृसिंहभारती-
एव गुरवः इत्येतत् सम्यक् प्रकटीकृतं चतुर्थ-पञ्चम-षष्ठ-
येषु ।

पानिधेः श्रीनरसिंहभारती-
गुरोः कृपा तत्र ममास्त्यमीदृशी ॥ (श्लो० ६-४३)

तत्त
एत
स्वा
न्यव
स्वगु
क्षेत्रे
स्वा
शिष

गुरुर्महात्मा मम सम्यगुक्तवान्
कृपानिधिः श्रीनरसिंहवाङ्मुनिः । (श्लो० ६-४४)

ममास्तु सोऽयं गुरुरत्र शान्तये
नृसिंहवाणीमुनिराट्कृपानिधिः ॥ (श्लो० ६-५१)

दशमेऽध्याये गुरुपरंपरा स्पष्टमित्थमभिहिता—

विद्याशंकरः
भारतीतीर्थः
विद्यारण्यः
चन्द्रशेखरभारती (I)
नरसिंहभारती (I)
चन्द्रशेखरभारती (II)
पुरुषोत्तमभारती

त्रि गुकविश्च एतेषां त्रयाणां आचार्याणां काले न्यवसत् ।

शृङ्गेरीश्रीशारदापीठाधिपेषु एकैकस्यापि आचार्यस्य विदेहमुक्त्यनन्तरं
त्तदाचार्यपूजाद्यङ्गतया ध्यानश्लोक एको वा द्वौ वा विरच्यन्त इति संप्रदायः ।
त एव श्लोकाः इदानीं गुरुपरंपरास्तोत्रात्मना विलसन्ति । श्रीनरसिंहभारती
वामि (I) शिष्ययोर्मध्ये पुरुषोत्तमभारतीस्वामिन एव गुरुणा साकं शृङ्गगिरौ
यवसन् । चन्द्रशेखरभारतीस्वामिनस्तु यात्रामेव कुर्वाणा आसन् ।
वगुरुविदेहकैवल्यानन्तरमपि हम्पीक्षेत्रे पट्टाभिषिक्ताः सन्तः त्रिकूटलुनरसिपूरु-
त्रे एव वसन्तः स्वल्पेनैव कालेन कैवल्यमगमन् । ततः पुरुषोत्तमभारती-
ामिनः पट्टाभिषिक्ताः बभूवुः । एते च श्रीनृसिंहभारतीस्वामिनामेव
ाष्याः, न तु चन्द्रशेखरभारतीस्वामिनाम् । एतैरेव कारणैः चन्द्रशेखरभारती-

षयकः ध्यानश्लोकः गुरुपरंपरास्तोत्रे न दृश्यते। अस्मिन् काव्ये तन्नामा-
दंशे चेदमेव कारणम् ॥

गुरुपरंपरास्तोत्रे श्लो० ३२, ३३—अनयोः श्लोकयोर्द्वयोरपि तुरीयपादः
ारसिंहयतिं भजे' इति एकरूपेणैव वर्तते इत्ययमंशः सम्यगावधेयः।
नैतत् स्पष्टं ज्ञायते-यत् उभावपि श्लोकौ एकमेव आचार्यं नरसिंहभारती-
मिनं (III) वर्णयत इति। एनद्रीत्यैव २२—२३ तमश्लोकौ उभावपि
ारण्याचार्यमेकमेव वर्णयतः ॥

एतादृशनिर्णयानुसारेण च गुरुपरंपरा अन्ते निर्दिष्टा वर्तते ॥

---

## NOTES

VV 25-26. According to *Śrī Purushōttama Bhāratī
arita* of poet Vishṇu, Śrī Narasimha Bhāratī I had two
ciples, Śrī Chandraśēkhara Bhārati II and Śrī
ushōttama Bhārati I. After Śrī Narasimha Bhāratī
ained *mukti*, Śrī Chandraśēkhara was installed on the
*a* before Emperor Dēvarāya at Hampi [1] (Canto IV).
new Āchārya then went to Śringeri where he conse-
ted a shrine in his guru's honour and then, accompanied
his brother disciple Śrī Purushōttama Bhāratī, went to
kūtalu-Narasipur at the confluence of the Kapilā
abbini) and Kāverī rivers, and there at the *āśrama* of
nyutāraṇya settled down to a life of penance. Very
rtly afterwards he attained *Kaivalya*, and Śrī
ushōttama consecrated a *liṅga* over his *samādhi*. The
peror's minister then led Śrī Purushōttama to Hampi
ere Dēvarāya had him installed as Jagadguru. Then he
nt to Śringeri and assumed the headship of the
*sthānam*.

1. Canto of *Śrī Purushottama Bhāratī Charita*.

Vishṇu was a contemporary of these three Āchāryas.

[2]In cantos IV, V, VI and X there are unequivocal references to this fact that Śrī Narasimha Bhārati I was the Guru of both Śrī Chandraśekhara and Śrī Purushōttama. In canto X the poet gives the following *paramparā*.

Śrī Vidyā Tīrtha
Śrī Bhāratī Tīrtha
Śrī Vidyāraṇya
Śrī Chandraśekhara (I)
Śrī Narasimha (I)
Śrī Chandraśekhara (II)
Śrī Purushōttama (I)

Every śloka in the Guruparampara stotra is a dhyāna śloka composed by an Āchārya in honour of his predecessor. Since Śrī Chandraśekhara Bhāratī II had no direct disciple, and was immediately succeeded by his co-disciple Śrī Purushōttama Bhāratī, there is no *dhyāna* śloka for him. He reigned for quite a short time.

[3]VV 32 & 33. Note that the fourth *pāda* in both these verses is the same-नारसिंहयति भजे. Obviously these two verses refer to one and the same guru.

Similarly [4]verses 22 and 23 refer to Śrī Vidyāraṇya.



2. Cantos of *Śrī Purushōttama Bhāratī Charita*.
3 & 4. Verses of *Śrī Guruparampara Stōtram*.

